# A page from Son's Diary

Summer of 1975

I must be about nine or ten year old boy. I had done ok in my annual school exams and summer holidays had started. As the holidays were getting over, there was excitement for the new school session. Parents just bought me a new set of curriculum books for the upcoming school session. I had got protective sheets to cover the newly bought books and notebooks and nicely covered then all. One evening I was walking with my father in the market place and noticed an aluminium school attache case displayed at a window of a shop. And now this was a new object I wanted to possess. I gently told my father. We were in a hurry and father advised that let us finish our work and later we could talk about this.

During dinner time I initiated the discussion again and started my story on how this new aluminium attache case was so good and I desperately wanted my parents to buy that for me. I wanted to buy this aluminium attache case to carry my books to school. I was asked to bring my existing school bag. I went to my room and looked at my current school bag and realized that the bag I had was in perfect condition. Nevertheless, I still wanted this new object. When I brought the bag in front of my parents, they obviously noticed that the bag was in good condition and there was no need to replace this with a new one. I got angry & left in the middle of my dinner as a show of my resentment and anger. My parents came to my room and tried to explain to me the reasoning. My father is soft at heart and I noticed from his body language that he was probably ok to by me this. He started saying some thing, any my mother interrupted and firmly said "no we are not bying." I was shattered. Over the next few days I kept trying my luck and heard back from my mother one day, "You may want this attache case but you do not need this." she patiently but firmly explained. I was disappointed, and started to believe that time that my mother did not love me and did not care about my feelings. The feeling faded away in few weeks after the school started. Through after 1 yr. I got that attache when the previous bag worn and torn to replaced.

A generation later, Bhavana and I are blessed with children Nikita and Nikhil, Now Nikhil is about in the same age group as I was in the summer. I do realize today even more the difference, I learnt from my growing kids to know that difference between the two. Mataji, Thank you,.

Vir Bhanu is son of Prof. Ved Kumari Ghai who lives with his wife Bhavana, daughter Nikita and son Nikhil and a Labrador Danny at Bangalore.

**—Vir Bhanu**

# विषयानुक्रमणिका

# ऋग्वेदे प्रकृतिचित्रणं ततः प्राप्तः सन्देशश्च

डॉ॰ रामनाथो वेदालङ्कारः

वेदाः खलु धर्मग्रन्था वा स्युरध्यात्मग्रन्था वा स्युर्विविधविद्यानां निधिग्रन्था वा स्युः, निर्विवादमिदं यत् तेषां विषयप्रतिपादनशैली काव्यमयी वर्तते। वेदेषु स्तुतिर्वा स्याद्, प्रार्थना वा स्याद्, उपासना वा स्याद्, गभीरं दार्शनिकं विवेचनं वा स्याद्, मानवस्य कर्तव्यबोधनं वा स्याद्, उद्बोधनं वा स्याद्, सत्कार्यस्य प्रशंसा वा स्याद्, दुष्कार्यस्य निन्दा वा स्यात्, पापं प्रत्याक्रोशो वा स्याद्, युद्धस्य भीषणः संहारो वा स्याद्, विजयदुन्दुभेर्नादो वा स्याद्, स्वराज्यस्यार्चना वा स्याद्, उषसां सूर्यस्य रात्रेश्चोदयवर्णना वा स्याद्, तमःसंहारस्याभिव्यक्तिर्वा स्याद्, पर्जन्यस्यामृतवर्षणं वा स्याद्, विद्युद्गर्जनायाविद्युद्दीप्तेश्च ताण्डवनर्तनं वा स्याद्, सरितां कलकलनिनादो वा स्याद्, वातस्य झञ्झाप्रवाहो वा स्याद्, खगानां कलकूजनं वा स्याद्, सघनवनानां हरीतिमा वा स्याद्, सरसशान्तेर्गीतं वा स्याद्, विकटक्रान्तेरुद्घोषो वा स्याद्, पवित्रस्य यज्ञस्य सन्देशो वा स्याद्, अग्निज्वालानामूर्ध्वगमनं वा स्याद्, सोमरसस्य प्रस्रवणं वा स्याद्—सर्वत्र काव्यमयी शैली दरीदृश्यते।

लघुलेखेऽस्मिन् ऋग्वेदस्य कतिपयानि प्रकृतिचित्रणानि प्रदर्श्य प्रतिपादयितुमीहामहे वयं यत्तैः प्रकृतिचित्रणैर्वेदाः कं सन्देशं मुखरयन्ति। कस्यापि काव्यस्य प्रकृतिचित्रणं चित्रणमात्रं चेत्, ततः पाठकैः कोऽपि सन्देशो न प्राप्यते चेद्, जागरूकता न लभ्यते चेत्, तद् हृत्तन्त्र्याः तारान् न झङ्कारयति चेत्, हृदि दिव्यचेतनां न प्रवाहयति चेत्, तर्हि तच्चित्रणं कामं कियदपि मञ्जुलं भवेत् तस्य न किमपि मूल्यम्।

## अरण्यवर्णनम्

प्रकृतिचित्रणप्रसङ्गे प्रथमं तावद् वयमरण्यवर्णनस्य सूक्तमेकम् (ऋग् 10/146) गृह्णीमः। अत्र कस्याश्चिद् वनवासिन्या एकस्य नागरिकस्य च मध्ये वार्ता वर्णिता। सूक्तमिदम् अरण्यानीसूक्त-नाम्ना कीर्त्यते। अरण्यानीशब्दस्यार्थं विशदयन् निरुक्तकृद् यास्को ब्रूते—'अरण्यानी अरण्यस्य पत्नी' इति (निरु. 9/28/24)। अरण्यं नाम वनम्, तस्य पत्नी न भवितुमर्हति, निश्चेतनत्वात् तस्य। मुख्यार्थबाधे सति लक्षणा प्रवर्तते, अरण्यस्य लक्ष्यार्थश्च 'अरण्यस्थः पुरुषः' इति सम्पद्यते। अरण्यस्थस्य पुरुषस्य 'अरण्यशब्देन' कीर्तने तावदिदं स्वारस्यं यत् तस्य पुरुषस्य वनेन सहैकात्म्यं तज्जीवनस्य जीवनमयत्वं च व्यज्यते। तस्य अरण्यस्थस्य पुरुषस्य वानप्रस्थस्य जनस्य वा पत्नी अरण्यानी वर्तते। कश्चिन्नागरिको वनं समायातस्तां वानप्रस्थपत्नीं पृच्छति—अयि वनदेवि, किमिति त्वम् अरण्येषु विलुप्तेव तिष्ठसि? ग्रामं किं न पृच्छसि? अत्र वने किं त्वां भयं न बाधते? सा वनवासिनी समुत्तरति—

**वृषारवाय वदते यदुपावति चिच्चिकः।**
**आधाटिभिरिव धावयन्नरण्यानिर्महीयते॥** –ऋग् 10/146/2

भद्र, त्वं भयस्य वार्तां करोषि। भयं कुतः? अत्र तु वीणां विनैव संगीतस्यानन्दः प्राप्यते। पश्य, यदा वृषारवो नाम तीव्रस्वरो जन्तुः स्वकीयेन तीव्रेण स्वरेण दिशो निनादयति, यदा च चिक्-चिक् इति मृदुध्वनिं कुर्वाणश्चिच्चिको नाम कश्चिदन्यो जन्तुस्तमुपतिष्ठते, तदा वनरूपो गायको वीणातन्त्रीषु 'स-रे-ग-म-प-ध-नि' इति सप्तस्वरानिव शोधयति। अत्र कवेः कीदृशं कल्पनाचातुर्यम् कीदृशश्चोत्प्रेक्षालङ्कृतिचमत्कारः, ध्वनिमात्रेण स्वार्थं पुरस्कुर्वतोः 'वृषारव-चिच्चिक' शब्दयोश्च प्रयोगे कीदृशं पदौचित्यप्रावीण्यम्।

सूक्तेऽस्मिन् षण्मन्त्राः सन्ति। परम्, एक एव मन्त्रोऽन्यो दीयते–

**आञ्जनगन्धिं सुरभिं बह्वन्नामकृषीवलाम्।**
**प्राहं मृगाणां मातरमरण्यानिमशंसिषम्॥** –ऋग् 10/146/6

वनवासिनी देवी वनवीथ्या महिमानं गायन्ती नागरिकं जनं कथयति। पश्य, एषा वनवीथी अञ्जनतरूणां विकसितैः पुष्पैः सौरभमयी, कृषीवलाम् विनैव प्रचुरान्नयुक्ता, विविधानां पशूनां माता च विद्यते। तामेनां को न स्तुयात्? 'बह्वन्नाम्-अकृषीवलाम्' इति कारणं विनैव कार्योत्पत्तिवर्णनादत्र विभावनालङ्कारसौन्दर्यं प्रस्फुटति। वनस्य स्त्रीलिङ्गो मातृरूपे वर्णनं चापि सुतरां मनोहारि। नागरिकस्य प्रश्न आसीत्–किं त्वां भयं नोद्वेजयति? वनवीथ्या मातृरूपेण चित्रणात् तस्य प्रश्नस्य स्वत एव समाधानं जायते, मातुर्भयं कः कुर्यादिति।

अरण्यशृङ्खलाया एतेन मनोमोहकेन चित्रणेन मानवः सन्देशं प्राप्नोति यत् तृतीये वयसि गृहभारं पुत्रे पुत्रवध्वां च निक्षिप्य स्वयं वानप्रस्थाश्रमं प्रविश्य वनस्यैकान्तं सुरम्यं च वातावरणमेव स्वनिवासस्थलीं कुर्यादिति।

## विश्वामित्रनदीसंवादः

सर्वान् प्रति मैत्रीभावं स्वमनसि निदधानः ऋषिकोटिकः पुरुषो विश्वामित्र इति कथ्यते। 'विश्वामित्रः सर्वमित्रः' इति हि निरुक्तम् (2/24)। विश्वशब्दस्य दीर्घान्तादेशे च 'मित्रे चर्षौ' (पा. 6/3/130) इति पाणिनीयं सूत्रं प्रमाणम्। स विश्वामित्रः सुदासो नृपतेः पुरोहितो वर्तते। यः खलु शुभदानकर्ता स सुदाः। 'सुदाः कल्याणदानः' इति तत्रैव निरुक्तम्। विश्वामित्रः शुभदानकर्तु र्नृपतेः सकाशात् शकटपूरं धनान्नवस्त्रादिकं दक्षिणायां प्राप्य स्वावासं वनप्रान्तरं प्रति निवर्तमानोऽस्ति। स पश्यति यद् या नद्यो वनान्नगरं प्रति गमनकाले न्यूनजलत्वात् सुतरणा आसन् ता एव सम्प्रति जलपूरं प्रवहन्ति, भयङ्कर्यश्च सञ्जाताः। नदीं विपाशं शुतुद्रीं च दृष्ट्वा विश्वामित्रस्य मनसि काव्यधारा प्रस्फुटति। विराडस्ति विस्तीर्णधारा नदी, शुतुद्री च सा या आशुद्राविणी, यां कश्चित् प्रतोदमिव हस्ते कृत्वा आशु द्रावयति सञ्चालयति। यथोक्तं निरुक्ते–"विपाड् विपाटनाद्वा विपाशनाद्वा विप्रापणाद् वा। शुतुद्री शु द्राविणी, आशु तुन्नेव द्रवतीति वा (निरु. 9/24/20)।" विश्वामित्रो ब्रूते–

**प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने।**
**गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते।।** –ऋग् 3/33/1

एते विपाट्छुतुद्र्यौ नद्यौ स्वकीयं जलपूरं समादाय तेन सह वेगेन धावतः। सचेतने इव सकामे इव एते पर्वतानां क्रोडं परित्यज्य परस्परस्या अग्रे गन्तुमिव तथा पयसा जवेते यथा धावनप्रतियोगितायां परस्परं स्पर्द्धमाने विमुक्तबन्धने द्वे घोटिके वेगेन धावतः। किञ्च, तटप्रान्तान् एते नद्यौ तथा लेलिहाने स्तः यथा शुभ्रे द्वे गावौ स्वकीयौ वत्सौ जिह्वया लीढः।

विपाट्छुतुद्र्यौ नद्यौ समाश्रित्य परस्ताद् विश्वामित्रो वर्णयति यदेते सरितौ रथारूढे इव सवेगं धावतः, ऊर्मिभिः सगलाश्लेषं सबाहुपाशबन्धनं मिलित्वा परस्परमानन्दसिक्ते इव कुरुतः (मन्त्रो द्वितीयः)। अत्र नद्योश्चेतनवद् वर्णनं कीदृशं सौन्दर्यमावहति।

तत्रैव सिन्धुरपि विद्यते। सिन्धुः खलु विशिष्टप्रवाहा नदी सिन्धुः स्यन्दनात् (निरु. 9/24/20)। एतासां नदीनां विकटं संगमं वीक्ष्य विश्वामित्रस्ता ब्रूते यद् मुहूर्तं यावत् स्वकीयप्रवाहादुपरमध्वं येनाहं पारं गच्छेयम् (मन्त्रः पञ्चमः)। नद्यः प्रत्युत्तरन्ति–वज्रबाहुरिन्द्रः पर्वतानां हिमशिलाः संत्रोट्य संत्रोट्य मेघं विच्छिद्य विच्छिद्य वाऽस्मान् प्रवर्तयति, सुपाणिः सविता देवोऽस्मानग्रेऽग्रे प्रवाहयति। वयं तु तयोरेवानुशासने चलामः। तव वचसा कथमवरुद्धप्रवाहा भवेम (मन्त्रः षष्ठः)। अन्ते च विश्वामित्रस्ता नदीः 'स्वसारः' इति सम्बोधयति–हे स्वसारः मदीयां प्रार्थनां यूयं शृणुत, दूरादहम् अन्नधनपूर्णं शकटं रथवाहनं च गृहीत्वा समायामि, यूयं मद्वचसा स्वप्रवाहं गाधं कुरुत, मम रथचक्रकीलादधःप्रवाहा भवत, येनाहं युष्मान् पारयेयम् इति। 'स्वसारः' इति सम्बोधनं श्रुत्वा नद्यश्चमत्कृता जायन्ते, तत्क्षणमेव च भ्रात्रे विश्वामित्राय ता गाधसलिला भवन्ति। विश्वामित्रोऽनायासं तास्तरति।

अचेतनाभिर्नदीभिः सह चेतनस्य मनुष्यस्य संवाद एव प्रमाणीकरोति यद् वर्णनमिदं काव्यमयं वर्तते। वर्णने च वेदस्य कविरतीव सफलो जातः। नदीनामलङ्कृतिमये वर्णने सुचारुचारुतया सह सन्देशोऽयमेतेन संवादेन प्राप्यते यत् स्वसारं कृत्वा सुमहत्यपि विद्वेषिणी शत्रुसेना स्वानुकूला कर्तुं शक्यत इति।

## सिन्धोर्द्विविधं वर्णनम्

ऋग्वेदस्य 10/75 संख्यके सूक्ते सिन्धुनद्या द्विविधं रूपमुपलभ्यते, एकं तस्या उग्रं रूपम्, द्वितीयं च सौम्यं रूपम्। पूर्वं तावदुग्रं रूपं दृश्यताम्–

**दिवि स्वनो यतते भूम्योपर्यनन्तं शुष्ममुदियर्ति भानुना।**
**अभ्रादिव प्र स्तनयन्ति वृष्टयः सिन्धुर्यदेति वृषभो न रोरुवत्।।**

–ऋग् 10/75/3

उग्ररूपस्य वर्णनं पुंल्लिङ्गे कविना कृतम्। पश्यत, सिन्धुनदोऽयं वृषभवद् रेभमाणः प्रवहति। अस्य तीव्रः शब्दो गगनमपि व्याप्नोति, भूमिमपि च। प्रदीप्ताभिः स्वकीयाभिरूर्मिभिरयमनन्तं वेगं धारयति। यदायं प्रचण्डं शब्दमुत्थापयन् प्रवहति तदा प्रतीयते यन्मेघात् सगर्जनं वृष्टयः पतन्ति। अत्र

वृषभस्योपमायां संगर्जन्तीनां वर्षाणामुत्प्रेक्षायां च या चारुताऽस्ति तां सहृदयाः पाठकाः सहजमेवानुभवितुं शक्नुवन्ति।

सिन्धोः सौम्यरूपं वर्णयन् कविस्तां युवतिरूपेण चित्रयति–

**स्वश्वा सिन्धुः सुरथा सुवासा हिरण्ययी सुकृता वाजिनीवती।**
**ऊर्णावती युवतिः सीलमावत्युताधि वस्ते सुभगा मधुवृधम्।।** –ऋग् 10/75/8

सिन्धुरूपेयं युवतिः सुरथारूढा सुवासाः हिरण्यालङ्कारधारिणी सुसज्जिता, क्रियाशीला, ऊर्णावस्त्रधारिणी, सुशीलवती, सुभगा चास्ति, माधुर्यवर्धकं रूपं च धारयति। अत्र नदी तीव्रप्रवाहत्वाद् रथाधिरूढा, सुन्दरप्रवाहत्वात् सुवासाः (सुरम्यशाटिकाधारिणी), प्रवहत्स्वर्णिमपुष्पत्वाद् हिरण्यालङ्कार-धारिणी, प्रवहतामूर्णासदृशानां विविधवर्णानां वानस्पत्यद्रव्याणां कारणादूर्णामयी, शालीनप्रवाहत्वात् शीलवती चोक्ता। सिन्धौ युवतित्वारोपश्च चामत्कारिकः। उग्रं रूपं प्रकटयितुं नद्याः पुरुषरूपचित्रणे, सौम्यं रूपं च दर्शयितुं तस्या युवतिरूपचित्रणे च यत् स्वारस्यं तदपि सहृदयैरनुभूयतां नाम।

चित्रणमिदं पुरुषाणां कृते बलवत्तां, प्रचण्डताम्, आक्रामकतां च, नारीणां कृते च माधुर्यं सन्दिशति।

## वायोः रथः

वायोरपि रूपद्वयं भवति–एकं तावत् प्रबलस्य झञ्झावातस्य रूपम्, द्वितीयं च शीतलमन्द-सुगन्धिपवनस्य रूपम्। झञ्झावातं वर्णयन् कविः प्राह यद् वातोऽयं रथमारुह्य सवेगं गच्छति।

**वातस्य नु महिमानं रथस्य रुजन्नेति स्तनयन्नस्य घोषः।**
**दिविस्पृग् यात्यरुणानि कृण्वन्नुतो एति पृथिव्या रेणुमस्यन्।।**

–ऋग् 10/168/1

वायो रथस्य महत्त्वं पश्यत, कथमेष रुजन् प्ररुंजन् वेगेन गच्छति, कथं गर्जन्नस्य घोषोऽस्ति, गगनं चुम्बन्नेष दिक्प्रान्तानरुणान् कुर्वन्, पृथिव्या धूलिमितस्ततो विक्षिपन् प्रद्रवति।

झञ्झावातस्य कीदृशश्चमत्कृतिपूर्णोऽयं स्वभावोक्तिरलङ्कारः। वायो रथारूढत्वकल्पनायामप्यद्भुतं सौष्ठवम्। एतेन वर्णनेन योगसाधकस्य प्राणायामद्वारा सकलशारीरमानसमलध्वंससूचनामपि कविः प्रयच्छति। तत्साकमेव च मनुष्ये विपदाक्रान्ते सति स वायुवत् सकला विघ्नबाधाः प्ररुजन्, गर्जन्, शत्रुदलं धूलिसात् कुर्वन् रक्तेन च रञ्जयन्नग्रगामी भवेदिति सन्देशोऽपि झञ्झावर्णनेनैतेन प्राप्यते।

आगामिन्येव मन्त्रे वायोः सुन्दरं सौम्यं वर्णनमपि कविर्विधत्ते। यस्यां दिशि समीरः सरति तस्यामेव दिशि स्थावरा वृक्षवनस्पत्याद्या अपि नमन्ति। नदीसमुद्रसरोवरादीनां जलपङ्क्योऽपि तस्मिना-मिलन्ति। जलवाचकोऽपशब्दः स्त्रीलिङ्गो भवति, तेन कविः सूचयति यद् यथा कश्चिद् युवकः पत्नीं प्राप्नोति तथैव समीरः सलिलसहतिरूपां सहधर्मिणीमालिङ्गतीव। तया सहैकस्मिन् रथे उपविशन् वार्तालापं कुर्वन् सम्पूर्णस्य भुवनस्य राजा स पवनदेवः सानन्दं मन्दगत्या चलति–

**सं प्रेरते अनु वातस्य विष्ठा एनं गच्छन्ति समनं न योषाः।**
**ताभिः सयुक् सरथं देव ईयतेऽस्य विश्वस्य भुवनस्य राजा॥**

–ऋग् 10/168/2

एतेन मनुष्यः सन्देशं लभते यत् स जीवने नित्यमुग्रतयैव न वर्तेत, किन्तु स्वकीयं मन्दस्मितमयम्, आनन्दमयम्, उल्लासदायकं, सद्व्यवहारपूर्णं मधुरं रूपमपि प्रदर्शयेदिति।

## ब्राह्मणा मण्डूकाः

वर्षतौं जलपूर्णेषु सरस्सु मण्डूकानां टर-टर-शब्दोऽतीव मोददायकः प्रतिभाति। प्रकृतेः सूक्ष्मनिरीक्षकाः कथयन्ति यन्मण्डूकाः पर्जन्यं वारि याचितुमपि टरटरायन्ते वर्षाधाराभिः संतृप्तिं चापि। तेषामेतयोर्द्वयोरपि ध्वन्योः स्पष्टमन्तरं भवति। वेदे मण्डूकनाम्ना वेदपाठिनो ब्राह्मणा अप्यभिहिताः।

निरुक्तकृद् यास्को मण्डूकशब्दं तावदेवं निर्वक्ति–मण्डूका मज्जनात्, मदतेर्वा मोदतिकर्मणः, मन्दतेर्वा तृप्तिकर्मणः, मण्डयतेरिति वैयाकरणाः, मण्ड एषामोक इति वा (निरु. 9/5)। अस्यायमाशयः–मण्डूकशब्दः प्लवनार्थकाद् 'मस्ज्' धातोर्निष्पद्यते। भेकाः सरोवराणां सलिले मज्जन्ति, वेदपाठिनो वटवश्च ज्ञानरसे। यद्वा, मण्डूकशब्दो मोदनार्थकाद् 'मदी' धातोः, तृप्त्यर्थकाद् 'मन्द (मदि)' धातोर्वा सिध्यति। भेकाः वर्षासलिले प्रमुदितास्तृप्ताश्च जायन्ते, वेदपाठिनो वटवश्च विद्यावृष्टौ। यद्वा, भूषणार्थकाद् 'मडि'धातोर्मण्डूकः। भेकानां चर्म भूषितं, वेदपाठिनां वटूनां च चित्तं भूषितं भवति। यद्वा, 'मण्ड-ओकस्' इत्यनयोर्योगेन मण्डूकशब्दः साधनीयः। भेकानाम् ओकः सरोरूपं गृहं मण्डितम्, वेदपाठिनां वटूनां च ओको विद्यागृहं भित्तिषु लिखिताभिर्ऋग्भिर्मण्डितं भवति।

ऋग्वेदस्य 7/103 संख्यके सूक्ते मण्डूकशब्देन भेकानां वेदपाठिनां ब्राह्मणानां च युगपद् रम्यं चित्रणं कृतम्। एष चास्ति तत्सूक्तस्य प्रथमो मन्त्रः–

**संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः।**
**वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः॥**

अत्र वर्षास्वानन्दमग्नानां शब्दायमानानां भेकानां वर्णने 'ब्राह्मणा व्रतचारिणः' इत्यत्र लुप्तोपमा। 'अपि वोपमार्थे स्याद् ब्राह्मणा इव व्रतचारिणः' इति हि निरुक्तम् (9/5/3)। ये भेकाः संवत्सरं यावद् भूमेरभ्यन्तरे तथैव सुप्ता आसन् यथा व्रतचारिणो ब्राह्मणाः समाधौ निद्रितास्तिष्ठन्ति, त एव वर्षाकाले संप्राप्ते पर्जन्यतर्पितां वाचमुच्चारयितुमारब्धवन्तः। 'ब्राह्मणा व्रतचारिणः' इत्यत्र व्यङ्ग्योत्प्रेक्षापि संभवति। भेकाः संवत्सरं यावद् भूमौ सुप्ता आसन्, यथा ते व्रतचारिणो ब्राह्मणा एव स्युः, यतो व्रतचारिणो ब्राह्मणा एव समाधिमास्थाय सुदीर्घमवधिं यावत् शयितुं शक्नुवन्ति।

मन्त्र एष वेदपाठिनो ब्राह्मणानधिकृत्यापि तादृशमेव रमणीयमर्थं प्रस्तौति। तत्पक्षे 'मण्डूकाः' इत्यत्र लुप्तोपमाऽङ्गीकार्या। मौनव्रतधारिणो ब्राह्मणाः, ये संवत्सरं यावत् तपस्यानिरता आसन्, सम्प्रति मण्डूका इव पर्जन्यतर्पितां वाचमुदीरयन्ति, मौनभङ्गं विधाय सस्वरवेदपाठे निरता जाता इत्यर्थः। निरुक्ते ब्राह्मणपक्षीयोऽर्थोऽपि सङ्केतित एव–संवत्सरं शिशयाना ब्राह्मणा व्रतचारिणोऽब्रुवाणाः' इति।

**गोमायुरेको अजमायुरेको पृश्निरेको हरित एक एषाम्।**
**समानं नाम बिभ्रतो विरूपाः पुरुत्रा वाचं पिपिशुर्वदन्तः।।** –ऋग् 7/103/6

वर्षासंतृप्ता एते भेका यदा शब्दायन्ते तदा कश्चिद् गोवद् वाचमुदीरयति, कश्चिच्च छागवत्। एषु भेकेषु कश्चित् पृश्निवर्णोऽस्ति, कश्चिच्च हरितवर्णः। विविधरूपा अप्येते 'मण्डूकाः' इति समानं नाम बिभ्रति, चतुर्दिक्षु च स्वकीयां वाचं प्रसारयन्ति।

मन्त्रो वेदपाठिपक्षेऽपि योज्यताम्। एषु वेदपाठिषु ब्राह्मणेषु कश्चिद् 'गोमायुः' गामुपजीव्य शोधपरः, कश्चिद् 'अजमायुः' अजमुपजीव्य शोधकर्ता वर्तते। एषु कश्चित् 'पृश्निः' सूर्यवर्णो गौरोऽस्ति, कश्चिच्च 'हरितः' श्यामवर्णः। 'विरूपाः' विभिन्नगुणा अप्येते 'मण्डूकाः' इति समानेन नाम्ना व्याह्रियन्ते, वेदपाठं कुर्वन्तश्च सर्वत्र स्वकीयां सस्वरां वेदवाचं ध्वनयन्ति। अत्र श्लेषा-लङ्कारच्छविरपि दर्शनीया।

स्पष्टमेव वैदिकं वर्णनमिदं काव्यमयभाषायां मण्डूकवदुत्साहेन वेदपाठं वेदाध्ययनं वेदानुसन्धानं च कर्तुं सन्देशं मुखरयति।

## चिरयुवतिः उषाः

उषसः ऋग्वेदीये काव्यमये वर्णने सहृदयाः काव्यमर्मज्ञा मुग्धाः सन्ति। सा दिवः पुत्री, चिरयुवतिः, सुन्दरी च वर्णिता। उषा रात्रिश्च गौरकृष्णवर्णे भगिन्यौ स्तः, ये परस्परस्या अनन्तरं गमनागमने कुरुतः।

**एषा दिवो दुहिता प्रत्यदर्शि व्युच्छन्ती युवतिः शुक्रवासाः।**
**विश्वस्येशाना पार्थिवस्य वस्व उषो अद्येह सुभगे व्युच्छ।।** –ऋग् 1/113/7

पश्यत, इयं द्युलोकस्य पुत्री, शुभ्रवसना, युवतिरुषा आविर्भवन्ती प्राच्यां दिशि दृश्यते। एषा सकलस्य पार्थिवस्य धनस्याधिष्ठात्री वर्तते। अयि सौभाग्यमयि उषः, प्रत्यहं त्वम् एवमेवाविर्भव।

**उदीर्ध्वं जीवो असुर्न आगादप प्रागात् तम आ ज्योतिरेति।**
**आरैक् पन्थां यातवे सूर्यायागन्म यत्र प्रतिरन्त आयुः।।** –ऋग् 1/113/16

उद्बुध्यध्वं भ्रातरः, जीवनदायी प्राणोऽस्मान् प्राप्तः। निविडोऽन्धकारोऽपगतः, ज्योतिरुद्गच्छति। उषा देवी सूर्यस्य यात्रायै मार्गं रिक्तं कृतवती। वयं च तां स्थितिं प्राप्ता यत्र जना ज्योतिरात्मसात्कृत्य दीर्घजीविनो जायन्ते।

**एषा दिवो दुहिता प्रत्यदर्शि ज्योतिर्वसाना समना पुरस्तात्।**
**ऋतस्य पन्थामन्वेति साधु प्रजानतीव न दिशो मिनाति।।** –ऋग् 1/124/3

पश्यत, इयं ज्योतिर्वसना दिवो दुहिता मनस्विनी देवी उषाः संमुखमाविर्भवति। एषा सत्यस्यैव मार्गमनुसरति। एषा प्रज्ञानवती काचिद् रमणीया मर्यादां नोल्लङ्घयति।

उषसश्चित्रणान्येतानि समाजे नार्याः कृते विशेषसन्देशवाहकानि। उषसां मुखेन कविः समाजे

नारीणामुज्ज्वलवेशभूषां, धनवत्तां, मनस्वित्तां, ज्ञानवत्तां, परिवारात् समाजाच्च तामसिकतामपसार्य ज्ञानस्य सदाचारस्य च ज्योतिषो दीप्तिं, मर्यादापालनमित्यादीनि कर्तव्यानि सूचयति।

## सूर्योदयमुपजीव्यैका कल्पना

ऋग्वेदे सूर्योदयमुपजीव्यैका चमत्कारिणी कल्पना कृता। रात्रिस्तमसाऽऽच्छन्ना विद्यते, सूर्यकिरणाः सूर्यमण्डले बिहिताः सन्ति। ते कथं सहेरन् यदस्मासु सत्सु भूतलमन्धकारमग्नं तिष्ठेत्। सुपर्णाः प्रियमेधाः किरणरूपा ऋषयः सूर्यं याचन्ते यद् भवता वयं कारागार इव स्वमण्डले बद्धाः कृताः, येन प्रकाशवन्तोऽपि वयं भूमण्डलं प्रकाशयितुं न क्षमाः, कृपया बन्धनादस्मान् मुञ्चतु भवान् येनास्मद्द्वारा भूतलस्यान्धकारोऽपगच्छेत्, सर्वेषां प्राणिनां चक्षूंषि च प्रकाशेन पूर्णानि भवेयुः।

**वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः।**
**अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान् निधयेव बद्धतरान्॥**

–ऋग् 10/73/11

मन्त्रेऽस्मिन् 'निधयेव बद्धान्' इत्यत्रोत्प्रेक्षालङ्कारस्य, किरणेषु ऋषित्वारोपे च रूपकालङ्कारस्य चमत्कारो दर्शनीयः। किरणेषु चेतनत्वमारोप्य तन्मुखाद् बन्धनमुक्तिप्रार्थनायामपि महत् स्वारस्यमस्ति।

वर्णनमिदं गुरुकुलस्य छात्रेष्वपि घटते। ते विद्यामधीत्य मेधाविनः ऋषयः सञ्जाताः, तथाप्याचार्यस्तान् समावर्त्य स्नातकान् न करोति। ते सुपर्णाः सन्ति, किमपि विषयमुपजीव्य कल्पनारूपैः पक्षैरुच्चैरुत्पतितुं क्षमन्ते। ते आचार्यमुपसृत्य निवेदयन्ति–भगवन्, त्वया कृपया वयं विद्वांसः कृताः, तथापि किमिति जालेनेवाबद्धा रक्षिताः, कृपां कुरु, अस्मान् बन्धनादुन्मुच्य स्नातकान् विधेहि, येन वयं जगति व्याप्तमज्ञानान्धकारमपसारयेम त्वत्कीर्तिं च विस्तारयेम।

वेदे सूर्यस्य वर्णनमतीव स्वभावोक्तिचमत्कारपूर्णं दृश्यते। किञ्चित् सौन्दर्यमवलोक्यताम्।

**चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।**
**आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च॥** –ऋग् 1/115/1

पश्यत, प्रकाशकानां सूर्यरश्मीनामद्भुतं चित्रविचित्रं च सैन्यमुद्गच्छति यन्मित्रस्य वायोः, वरुणस्य जलस्य, अग्नेः वह्नेश्च चक्षुः प्रकाशकं वर्तते। एतेन सूर्येण द्यौर्भूतलमन्तरिक्षं च परिपूर्णं कृतम्। सूर्योऽयं जङ्गमस्य स्थावरस्य च जगतो जीवनाधारो जातः।

**दिवो रुक्म उरुचक्षा उदेति दूरे अर्थस्तरणिर्भ्राजमानः।**
**नूनं जनाः सूर्येण प्रसूता अयन्नर्थानि कृण्वन्नपांसि॥** –ऋग् 7/63/4

दिवो देव्याः स्वर्णाभूषणम्, आकाशपारावारस्य नौका, दीप्यमानो विस्तीर्णनेत्रोऽयं सूर्यः प्राच्यामुदयते, सुदूरेऽस्य लक्ष्यं वर्तते। अनेन भ्राजमानेन सूर्येण प्रेरिता मानवा नूनं स्वस्योद्देश्यपूर्तौ संलग्नाः सन्तः कर्माणि कुर्वन्त आसते।

अत्र सूर्ये स्वर्णाभूषणत्वस्य, प्रातरारभ्य सायंपर्यन्तमाकाशसागरे तरन्त्या नौकायाश्चारोपः कियान्

काव्यमयः।

## रात्रिदेव्या आगमनम्

उषसो वर्णनं यथा वेदेषु युवतिरूपेण कृतं तथैव रात्रिरपि वेदकाव्ये युवतिरेव। तदाविर्भावस्य सुरम्यं वर्णनं कुर्वन् वैदिककविरुद्गिरति–

**आ प्रागाद् भद्रा युवतिरह्नः केतून्समीर्त्सति।**
**अभूद् भद्रा निवेशनी विश्वस्य जगतो रात्री।।** –साम. 608

पश्यत, एषा रात्रिरूपा युवतिरागतास्ति। दिने सर्वत्र विकीर्णान् सूर्यरश्मीनेषा संहरति। भद्रा रात्रियुवतिरियं समस्तस्य भुवनस्य विश्रामदायिनी संजाता।

रात्रियुवत्याश्चित्रणमेतन्नार्यै कर्तव्यमुपदिशति यत्सापि दिने प्राङ्गणे विकीर्णानि वस्तून्युत्थापयेत्, दिवसे क्रियमाणानि कार्याणि चोपसंहरेत्, विश्रामदायिनी च स्यात्।

## पर्जन्यस्य स्वभावोक्तिः

ऋग्वेदे पर्जन्यदेवताकस्य (5/83) सूक्तस्य पर्जन्यविषयिण्यः स्वभावोक्तयोऽपि मनोमौग्ध्य-कारिण्यः सन्ति।

**रथीव कशयाऽश्वाँ अभिक्षिपन्नाविर्दूतान् कृणुते वर्ष्यां अह।**
**दूरात् सिंहस्य स्तनथा उदीरते यत् पर्जन्यः कृणुते वर्ष्यं नभः।।**

–ऋग् 5/83/3

यथा सारथिः प्रतोदेन रथस्य धुरि नियुक्तानश्वान् गन्तुं प्रेरयति, तथैव पर्जन्यो वृष्टिसूचकान् पवनदूतान् प्रेरयति। यदा पर्जन्यो गगनं वृष्ट्युन्मुखं कर्तुं गर्जति तदा प्रतिपक्षिगर्जनमिव मन्यमानः केसरी गर्जनेनैव तं प्रत्युत्तरति। अत्र प्रथमचरणस्योपमा स्वभावोक्तेरलङ्कारस्याङ्गभूता सती चमत्कृति-मुत्पादयति।

**प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते स्वः।**
**इरा विश्वस्मै भुवनाय जायते यत् पर्जन्यः पृथिवीं रेतसाविति।।**

–ऋग् 5/83/4

वाताश्चलन्ति, तडितस्तडतडायन्ते, ओषधयो वर्धन्ते, गगनं वर्षति, सर्वेभ्यो भूतेभ्योऽन्नमुपजायते, यदा पर्जन्यः स्वकीयेन वृष्टिरसेन भुवं तर्पयति। इयमपि स्वभावोक्तिर्विशेषरमणीया।

## सोमसूर्यरूपी शिशू

**पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परियातो अध्वरम्।**
**विश्वान्यन्यो भुवनाभि चष्टे ऋतूँरन्यो विदधज्जायते पुनः।।**

–ऋग् 10/85/18

पश्यत, द्वौ शिशू इमौ माययाऽन्योन्यमनुसरन्तौ, क्रीडां कुर्वन्तौ यज्ञं सञ्चालयतः। अनयोरेकः सर्वाणि भुवनानि प्रकाशयति, अन्यतरश्च ऋतून् निर्मिमाणो मृत्वापि पुनः पुनर्जन्म गृह्णाति।

स्पष्टमेव शिशू इमौ सूर्याचन्द्रमसौ स्तः। एतौ अहोरात्ररूपं यज्ञं सञ्चालयतः। शिशुः सूर्यो लोकान् प्रकाशयति, चन्द्रश्चामावस्यायां मृत्वापि प्रतिपदि विकलाङ्गरूपेण जन्म गृहीत्वा, क्रमेण वृद्धिं गच्छन् पूर्णिमायां पूर्णाङ्गो जायते।

अत्र चन्द्रमसं सूर्यं च शिशू कथयन् वेदस्तस्या अतिशयोक्तेः सौन्दर्यमुपस्थापयति यस्यामुपमेय-मुपमानेन निगीर्यते। यद्वा, सोमार्कदेवताकत्वाद् ऋचोऽस्याः सोमे सूर्ये च शिशुत्वमारोपयन् कविः रूपकालङ्कारच्छटां वितनुते। यद्वा, ऋचमेनां प्रहेलिकां मत्वा प्रहेलिकालङ्कारविच्छित्तिरत्र द्रष्टुं शक्यते।

## मरुतां काव्यमयं वर्णनम्

अधिदैवतदृष्ट्या मरुतो वेदे वृष्टेरानेतारः पवनाः सन्ति। ते विद्युतोऽट्टहासादिव जाता इति वेदस्य कविः कल्पयति। मेघदूतनाम्नि खण्डकाव्ये कविः कालिदासः कैलासं वर्णयन् आह यत् गिरिरयं शिवस्य निवासस्थानम्, शिवश्चात्र प्रत्यहमट्टहासं कुरुते, हासस्य च वर्णः कविसम्प्रदाये धवलो मन्यते, अतः कल्प्यते यद् हिमधवलः कैलासोऽयं पुञ्जीभूतः शिवस्याट्टहास एवास्ति शृङ्गोच्छ्रायैः कुमुदविशदै र्यो वितत्य स्थितः खं, राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः (पूर्वमेघः, 58)। अस्याः सौष्ठवमय्याः कालिदासकल्पनाया मूलं वेद एव प्रतीयते।

**हस्काराद् विद्युतस्पर्यतो जाता अवन्तु नः।**
**मरुतो मृडयन्तु नः॥** –ऋग् 1/23/12

मरुतां वर्णनप्रसङ्गे उपमालङ्कारमिश्रिता स्वभावोक्तिरप्येका दर्शनीया–

**वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति।**
**यदेषां दृष्टिरसर्जि॥**

**दिवा चित् तमः कृण्वन्ति पर्जन्येनोदवाहेन।**
**यत् पृथिवीं व्युन्दन्ति॥** –ऋग् 1/38/8,9

यदा मरुद्भिरुत्पादिता वृष्टिर्भवति तदा रम्भायमाणा गौरिव विद्युद् गर्जति, धेनुश्च यथा वत्सं प्राप्नोति तथा वृष्टिर्भूतलमागच्छति। मरुत इमे यदा जलवाहकेन पर्जन्येन भूमिं क्लेदयन्ति तदा दिवसेऽप्यन्धकारं जनयन्ति।

मरुतां वर्णनमिदं मानवान् सन्दिशति यत् तेऽपि जगत्यानन्दस्य वृष्टिं कुर्यु र्न तु कलहस्य विद्वेषस्य दुःखस्य वा।

एवमस्माभिर्ऋग्वेदस्य कतिपयानां प्रकृतिचित्रणानां संक्षिप्तं चित्रं प्रस्तुतम्, मानवाय च ततः कः सन्देशः प्राप्यते इत्यपि दृष्टम्। मन्यामहे यत् सहृदयाः पाठका नूनमेभिर्वर्णनैश्चमत्कृतिमनुभूय वेदानां काव्यमयतां हृदि निधास्यन्तीति।

# वेदेषु पर्यावरणम्

प्रो. महावीर अग्रवाल

'सर्वज्ञानमयो हि सः', 'सर्वं वेदात् प्रसिध्यति', 'वेदोऽखिलो धर्ममूलम्' इत्यादि सुवचनैः वेदानां सर्वविद्यामयत्वं विश्वकल्याणकारित्वं च सिध्यति। भारतीयाः विद्वांसः, दार्शनिकाः, आचार-शिक्षाप्रवणाः, शब्दतत्त्वमीमांसानिपुणाः वैयाकरणाः, वैज्ञानिकाश्चापि वेदानां परमप्रामाण्यं उद्घोषयन्ति।

आधुनिकयुगनिर्माता महर्षि दयानन्दोऽपि 'वेदः सर्वासां सत्यविद्यानां पुस्तकं, वेदस्य अध्ययनम् अध्यापनं, श्रवणं श्रावणं च सर्वेषां परमो धर्मः' इत्युद्घोषयामास। अतः सर्वासां समस्यानां समाधानमपि वेदेषु प्राप्यते नात्र संशयः। साम्प्रतिके काले न केवलं भारतदेशे अपितु विश्वस्मिन् विश्वे पर्यावरण-प्रदूषणसमस्या सुरसा राक्षसीव सर्वं जगत् भक्षयितुं समुद्यता दृश्यते। अस्याः समाधानं वेदेषु बाहुल्येन प्राप्तुं शक्यते। किं तावत् पर्यावरणम् इति प्रश्ने समुदिते, पर्यावृत्तिः पर्यावरणम्, यत् परितः आवृणोति आच्छादयति तत् पर्यावरणम्। ये मानवं परितः आच्छादयन्ति, मानवजीवनं च प्रभावयन्ति, ते पर्यावरणशब्देन गृह्यन्ते। तेषु वायुमण्डलं स्थलमण्डलं जलमण्डलं तथा रासायनिकतत्त्वानां च संग्रहो वर्तते। एवं पर्यावरणं भौतिकजैविकतत्त्वानां संकलनेन भवति। भौतिकतत्त्वेषु मृत्तिका, जलं वायुः प्रकाशश्च सन्ति। जैविकतत्त्वेषु समस्तजीवजगद्वृक्षवनस्पतयश्च सन्ति।

एतेषां सर्वेषां तत्त्वानां सम्यक् संरक्षणेन पर्यावरणं संरक्षितं भवति। विषयेऽस्मिन् चतुर्षु वेदेषु अनेके मन्त्राः विद्यन्ते। कस्यचिदपि मांगलिककार्यस्य आदौ अन्ते च याः विविधाः प्रार्थनाः क्रियन्ते तासु पर्यावरणसंरक्षणसंदेशाः प्राचुर्येण श्रूयन्ते। सुप्रसिद्धे शान्तिपाठमन्त्रे द्युलोकपृथिवीलोकयोः समस्तानामेव चेतनाचेतनानां संतुलनं, संरक्षणं, कल्याणकारित्वञ्च काम्यते।

ओ३म्-''द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि।''

वैदिकाः ऋषयः जानन्ति स्म यत् सूर्यः ऊर्जायाः अखण्डं स्रोतः। सूर्यालोकेन उष्मया च पृथिव्यां प्राणिषु वनस्पतिषु च जीवनं सञ्चरति। सूर्यरश्मिनाम् उष्णतया मेघाः भवन्ति। ये भूमौ वर्षां कारयित्वा अन्नोत्पादने साहाय्यं विदधति, वर्षाभिरेव च ओषधयः वनस्पतयश्च पुष्यन्ति। अन्नेन मानवशरीरं पुष्यति औषधिभिश्च पुष्टिं प्राप्नोति। भगवन्तं भास्करं प्रसादयितुं विरचितः ऋचः प्राणिजगति वनस्पतिजगति च सूर्यस्य अमितं प्रभावं सामान्यजनान् अवगमयन्ति। ऊर्जायाः अपरिमितस्रोतरूपं

सूर्यं जगतः आत्मा प्रतिपादयन् ऋषिः स्तुतिं प्रयुङ्क्ते-

**दिव्यं सुवर्णं वायसं बृहन्तमपां गर्भं दर्शतमोषधीनाम्।**
**अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्तमवसे जोहवीमि।।** ऋग्वेद १-१६४-५२

द्युलोके विराजमानं, गतिमन्तं, महामहिमशालिनमपां केन्द्रभूतं, ओषधीनां पुष्टिकरं, जलवृष्ट्या भूमेः तृप्तिकरं सूर्यदेवं वयम् आह्वयामः-

**तस्याः समुद्रा अधि विक्षरन्ति तेन जीवन्ति प्रदिशश्चतस्त्रः।**
**ततः क्षरत्यक्षरं तद्विश्वमुपजीवति।** ऋ. १-१६४-४२

सूर्यकिरणानां तीक्ष्णता वायुमण्डले विद्यमानान् असंख्यातान् दृश्यान् अदृश्यान् वा कीटाणून्, विषाणून् च नाशयति। यथोक्तम्-

**उदपप्तदसौ सूर्यः पुरु विश्वानि जूर्वन्।**
**आदित्यः पर्वतेभ्यो विश्वदृष्टो अदृष्टहा।** ऋ. १-१९१-९

वेदे यथा सूर्यः भृशं स्तूयते तथैव अग्निरपि पर्यावरणरक्षकत्वात् यत्र-तत्र सश्रद्धं जेगीयते। ऋग्वेदस्य प्रथमे मन्त्रे अग्निदेवः वैदिकैः ऋषिभिः स्तूयते, प्रार्थ्यते च-

**ओ३म् अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम् होतारं रत्नधातमम्।** १-१-१

अग्नेर्महिमानं प्रतिपादयन्तोऽनेके मन्त्राः वेदेषु दृष्टिपथमायान्ति। अग्नेः सम्बन्धो प्राचीनतमेन उत्कृष्टतमेन कर्मणा यज्ञेन सह वर्तते। वेदेषु यज्ञमहिमा पर्यावरणसंरक्षणाय सर्वोत्तमा मता। यथा तरुगुल्मादीनां महत्त्वं पर्यावरणदृष्ट्या वरीवर्त्ति तथैव यज्ञोऽपि वैदिकसंस्कृतेरङ्गभूतेषु तत्त्वेषु प्राधान्यं भजते। यज्ञादिना वरुणेन्द्रादयो पर्यावरणसम्पोषणं सुभिक्षञ्च सम्पादयन्तीति भारतीयं वैज्ञानिकं चिन्तनमत एव यास्कादिभिः प्रकाशितं यद्धि येन कर्मणा याजका यजमानेभ्योऽन्नादिकं याचन्तेऽथवा यजमाना येन कर्मविशेषेण देवेभ्यो वर्षादिकं प्रार्थयन्ते तत्कर्म खलु यज्ञ इति व्यपदिश्यते। लोके प्रत्यक्षमनुभूयते यद्वै यज्ञसम्पादनेन वर्षा भवति वर्षया च सम्पद्यते अन्नोत्पत्तिरन्नोत्पत्त्या च जगति विद्यमानानां समस्तानां जीवानां पोषणं भवतीति। यज्ञेन संक्रामकरोगानां समूलोच्छेदो भवतीति वैज्ञानिकैः स्वीकृतं तथ्यम्। यज्ञेषु प्रयुक्तं घृततिलादिकं वस्तुजातं यज्ञधूमरूपेण परिणतं भूत्वा वायुमण्डले प्रसरत् प्रदूषणकराणां जैविकतत्त्वानां विनाशं करोति। वेदेषु यज्ञस्यायं पक्षः सविशेषं निरूपितोऽस्ति। उक्तं च यजुर्वेदे-

**मनसपत इमं देव यज्ञं स्वाहा वाते धाः।** –यजु. २-२१

पर्यावरणे वायुमण्डले वा यज्ञधूमानां प्रसारेण वायुशुद्धौ सत्यां सर्वे प्रसीदन्ति। ऋतुसन्धिषु प्रायशो व्याधिबाहुल्यं लोके दृश्यते। अतो हि ऋतुसन्धिषु यज्ञानुष्ठानानां विधेयत्वं सविशेषं वर्णितमस्ति

शास्त्रेषु। यज्ञानुष्ठानेन वायुमण्डलं प्रदूषणरहितं भवतीति यजुर्वेदे एभिः शब्दैः प्रकाशितं भवति-

**समिधाऽग्निं दुवस्यत घृतैर्बोधयतातिथिम्।**
**अस्मिन् हव्या जुहोतन।** यजु. ३-१

अग्नेरिव वायोरपि प्राणिनां जीवनाधायकत्वं मन्यते। अद्यत्वे नगरेषु महानगरेषु वा अहर्निशमितस्ततो धावद्भ्यो वाहनेभ्यो निःसृतेन दूषितधूमेन मानवाः विविधरोगग्रस्ताः जायन्ते। अतो वायोः शोधनम् अत्यावश्यकम्। वेदः उद्घोषयति-

**वात आ वातु भेषजं शम्भुमयोभु नो हृदे।**
**प्रण आयूंषि तारिषत्।।** ऋ. १०-१८६-१

**यददो वात ते गृहेऽमृतस्य निधिर्हितः।**
**ततो नो देहि जीवसे।।** ऋ. १०-१८६-३

**आ वात वाहि भेषजं विवात वाहि यद्रपः।**
**त्वं हि विश्वभेषजो देवानां दूत ईयसे।।** ऋ. १०-१३७-३

एतैः मन्त्रै पर्यावरणे वायोः महत्त्वं सिध्यति। वेदेषु जलीयपर्यावरणरक्षार्थमपि यत्र-तत्र विस्तारेण सदुपदेशाः प्राप्यन्ते। जलं जीवनं वर्त्तते। दूषिते जले मानवानां स्वास्थ्यमपि नश्यति।

ऋग्वेदे सोमलताया निरुपमं महत्त्वं विगीतम्। यदा सोमलताभ्यो रसो निस्सार्यते तदा विशिष्टानां मन्त्राणां गानं विधीयते स्म। तत्र सोमरसः स्फूर्तिदायकः अमृतत्वसम्पादकश्च स्वीकृतः। उक्तमपि-

**'इन्द्रस्ते सोमसुतस्य पेयाः कृत्वे दक्षाय विश्वे च देवाः।'**

गीतायां भगवान् श्रीकृष्णः 'अश्वत्थः सर्ववृक्षाणाम्' इति कथयन् अश्वत्थनामकस्य वृक्षस्य भगवत्सारूप्यप्रकाशनेन वृक्षाणां महत्त्वमपि प्रतिष्ठापयति स्म। एवमेव भारतीयपरम्परायां वटवृक्षस्य, बिल्ववृक्षस्य, आम्रनिम्बपिप्पलशाल्मलीप्रभृतानां वृक्षाणां च छेदनं पर्यावरणसंरक्षणदृष्ट्या निषिद्धं विद्यते। यजुर्वेदे कथ्यते- 'वनस्पतिः शमिता'

अथर्ववेदे वनस्पतिपशुपक्षिसम्बद्धानां मन्त्राणां बाहुल्यं विद्यते, एतेषां मन्त्राणां विविधरोगोपचारविधौ महानुपयोगो विद्यते। ऋग्वेदस्य ओषधिसूक्ते आरोग्यकारकाणां पादपानां वर्णनं बहुत्र समुपलभ्यते यथाहि-

**'शतं वो अम्ब धामानि सहस्रमुत वो रुहः।**
**अधा शतक्रत्वो यूयमिमं मे अगदं कृत।।'**

**ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः।**
**अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः।।** ऋग्वेदः १०-९७-२

शुक्लयजुर्वेदे वनस्पतयः सादरं प्रणम्यन्ते-

**नमो वृक्षेभ्यो हरिकेशेभ्यः**
**वनानां पतये नमः**
**वृक्षाणां पतये नमः**
**नमो वन्याय च।**

एवं वेदेषु पञ्चमहाभूतानां स्तवनं, वन्दनं, अभिनन्दनं च कुर्वद्भिः ऋषिभिः पर्यावरणरक्षणार्थम् एतेषां महत्त्वं प्रतिपाद्यते।

यदि वयं विश्वम् सुखसौभाग्योपेतं आनन्दपरिपूर्णं रोगरहितञ्च कर्तुमिच्छामस्तर्हि वेदप्रतिपादितानामुपायानामवलम्बनं सर्वथा आवश्यकम्।



# काव्यलक्षणम्

प्रो॰ रामप्रताप:

पुष्णन्ति चमत्कारं ध्वनिरीतिरसादय:।
व्रजन्त्यपि तदङ्गत्वं काव्ये कविविनिर्मिते॥1॥

तत्रोपस्थापनं तेषां कवे गौणं प्रयोजनम्।
मुख्यं प्रयोजनं काव्ये सा चमत्कारसंस्थिति:[1]॥2॥

निर्दोषं गुणसम्पृक्तं रीतिवृत्तिसमन्वितम्।
समवेतं रसाद्यैश्च ध्वनिवक्रोक्तिगर्भितम्॥3॥

सुप्रयुक्तै: सुविज्ञातैराकाङ्क्षायोग्यतायुतै:।
युक्तं पदै: पदार्थैश्च नवनवार्थद्योतकै:[2]॥4॥

वर्णना लभ्यते यस्मिंल्लोकोत्तरा विलक्षणा।
कवे र्यन्निपुणं कर्म नवोन्मेषै: प्रपूरितम्[3]॥5॥

औचित्यं नायके यत्रानौचित्यं प्रतिनायके।
नृसिंहन्यायत: सृष्टिर्यस्मिंश्च परमाद्भुता॥6॥

---

1. तेन ब्रूम: सहृदयमन:प्रीतये तत्स्वरूपम् (ध्वन्यालोक: 1, 1) अत्र आनन्दवर्धनाचार्येण ध्वन्यालोकग्रन्थलेखनप्रयोजनं सहृदयमन:प्रीति: इति निगदितम्। प्रयोजनमिदं काव्यस्यापि स्वीकर्तुं शक्यते। प्रीतिशब्दस्य आनन्दश्चमत्कारश्चेमौ पर्यायौ स्त: एवं प्रीत्यपरपर्यायश्चमत्कार: काव्यप्रयोजनं जायते।
अथ च रामायणमहाभारतप्रभृतिनि लक्ष्ये सर्वत्र प्रसिद्धव्यवहारं लक्षयतां सहृदयानामानन्दो मनसि लभतां प्रतिष्ठामिति (ध्वन्यालोक: 1, 1 वृत्तिभाग:)। अत्र प्रीतिशब्दस्य पर्याय: आनन्द: प्रदर्शित:। अत्र एतत् स्थलम् अभिनवगुप्ताचार्य: एवं व्याख्याति-ध्वने: स्वरूपं लक्षयतां सम्बन्धिनि मनसि आनन्दो निर्वृत्यात्मा चमत्कारपर्याय: प्रतिष्ठां लभतामिति प्रयोजनं सम्पादयितुं तत्स्वरूपं प्रकाश्यते इति सङ्गति: (ध्वन्यालोक: 1, 1 वृत्ति:, लोचनटीका)। एवं ग्रन्थकृत: कवे: श्रोतुश्च मुख्यं प्रयोजनमुक्तम्। तत्रैव लोचनटीका।
2. (क:) एक: शब्द: सम्यग् ज्ञात: सम्यक् प्रयुक्त: स्वर्गे लोके च कामधुग् भवति।
(ख:) वाक्यं स्याद् योग्यताकाङ्क्षासत्तियुक्त: पदोच्चय:।
वर्णा: पदं प्रयोगार्हानन्वितैकार्थबोधका:।
अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मत:॥ साहित्यदर्पण: 2, 2
3. (क:) यत्काव्यं लोकोत्तरवर्णनानिपुणं कविकर्म तत्। काव्यप्रकाश: 1, 2 वृत्ति:।
(ख:) लोकेति-लोकोत्तरचमत्कारप्रकर्षानुगुणा वर्णना विभावाद्युपनयनं तत्र निपुण:। तदुक्तं काव्यकौतुके-

नित्यनूतनतां बिभ्रन् नित्यानन्दप्रदायकम्।
अपूर्वं साधुवादार्हं सत्यं चेतोहरं शिवम्[1]॥7॥

आख्यानजनितं चापि कौतुकं यत्र वर्धते।
चमत्कारात्मकं वाक्यं काव्यं तदभिधीयते[2]॥8॥

उक्तिविशेषयुक्तेऽस्मिन् भाषाया अस्ति गौणता।
अर्थानामपि गाम्भीर्यं शब्देष्वपि चमत्कृतिः[3]॥9॥

छन्दोबद्धं गतच्छन्दः क्वचिद् वाऽप्युभयात्मकम्।
स्वेच्छया क्रियते काव्यं सत्कविभि र्निरङ्कुशैः॥10॥

एकस्मिन् क्वचिद् वाक्ये मुक्तके रूपके क्वचित्।
कुत्रचिच्च महाकाव्ये दृश्यते सा हि काव्यता॥11॥

एतत् प्रदर्शितं पूर्वं काव्यसामान्यलक्षणम्।
विशेषलक्षणं चापि प्रस्तूयते समासतः॥12॥

**क्वाप्यनौचित्यसम्मिश्रं रसादिरहितं क्वचित्[4]।**
**अखण्डबुद्धिनिर्ग्राह्यं हेतुश्चित्तचमत्कृतेः॥13॥**

---

प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता।
तदनुप्राणनाजीवद्वर्णनानिपुणः कविः॥ काव्यप्रकाशः 1,2, दीपिका टीका।
(गः) कविवाङ्निर्मितिः काव्यम्।
असाधारणचमत्कारिणी रचना हि निर्मितिः। अलङ्कारकौस्तुभः 1, 2 तथा वृत्तिः।

1. (कः) क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः॥ शिशुपालवधम् 4, 171
(खः) ए थिङ्ग ऑफ ब्यूटी इज़ ए जॉय फॉर ऐवर - जॉन कीट्स। - ओ टू दी ग्रेशियन उर्न।
2. (कः) न हि चमत्काररहितस्य कवेः कवित्वं काव्यस्य वा काव्यत्वम्। कविकण्ठाभरणम् 3, 1, वृत्तिः।
(खः) चमत्कारजनकं हि काव्यमिह निरूप्यम्। काव्यप्रकाशः 1, 4 मधुमतीटीका
(गः) वागर्थौ सचमत्कारौ काव्यं काव्यविदो विदुः। चमत्कारचन्द्रिका प्रथमविलासः पृ. 3।
(घः) चमत्कारत्ववत्त्वमेव काव्यत्वमिति फलितम्। . . . काव्यजीवितं चमत्कारित्वं चाविशिष्टमेव। रसगङ्गाधरः प्रथमाननम्, काव्यलक्षणम्।
(ङः) विशिष्टशब्दरूपस्य काव्यस्यात्मा चमत्कृतिः।
हरिदासकृतकाव्यालोकः डॉ. वी. राघवन् स्टडीज़ ऑन सम् कन्सैप्ट्स ऑफ दी अलङ्कारशास्त्र (1942) पृ. 278
3. अर्थनिवेशास्त एव शब्दास्त एव परिणमन्तोऽपि।
उक्तिविशेषः काव्यं भाषा या भवति सा भवतु॥ राजशेखरकृता कर्पूरमञ्जरी 1, 7
4. क्वापि क्वचिदित्यनेन सर्वत्रौचित्यरसभावादिसमवेतं क्वचित्तु तेषामभावे सत्यपि चमत्कारसत्त्वात् तेषु स्थलेषु काव्यव्यवहारो दृश्यते एव।

**चमत्कारात्मकं वाक्यं काव्यं स्यात् कविकल्पितम्।**
**चमत्कारादिमद्वाक्यं काव्यसंज्ञां प्रयाति वा[1]।।14।।**
**शब्दार्थै र्ललितै र्युक्तं चमत्कारेण पेशलम्।**
**काव्यत्वजातिमत्काव्यं प्रोच्यते कर्म वा कवे:[2]।।15।।**

---

1. (क:) जायते परमानन्दो ब्रह्मानन्दसहोदर:।
यस्य श्रवणमात्रेण तद् वाक्यं काव्यमुच्यते।।
वस्तुतस्तु अदोषं गुणवत्काव्यमित्यादिवाक्यप्रतिपादितस्वर्गविशेषजनकतावच्छेदकं काव्यत्वमखण्डं कल्पनीयम्। विश्वनाथदेवकृत: साहित्यसुधासिन्धु: 1, 4 तथा वृत्ति:।
टिप्पणी - अत्र स्वर्गविशेषस्य चमत्कारविशेष इत्यर्थ:।
(ख:) नवीनास्तु - काव्यत्वमखण्डोपाधि: चमत्कारजनकतावच्छेदकस्य काव्यपदप्रवृत्तिनिमित्तस्य चान्यस्य वक्तुमशक्यत्वात् तदेव लक्षणमस्तु। काव्यप्रकाशखण्डनम् 1, 4 वृत्ति:।
(ग:) न च वाक्यावस्थायां पदानि पदार्था वा विभिद्यन्ते यथा चित्रे नीलपीतरक्तादय: पानके गुडाम्लीकमरिचादयो ग्रामरागे षड्जर्षभगान्धारादय: पृथक्त्वेन नावभासन्ते (वृ.दे. 1, 89) तथा क्रियाकारकविशेषणादिपदानि तदर्थवाक्यार्था अभेदेनैव प्रतीयन्ते वाक्यार्थो हि पदपर्यायस्त्वखण्ड एवाभिधीयमानो दृश्यते। काव्यप्रकाश: 4, 47 वृत्ति: विवेकटीका।
(घ:) अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यो वाक्यमेव च वाचकम्। काव्यप्रकाश: 4, 47 वृत्ति:।
(ङ:) औचित्यरचितं वाक्यं सततं सम्मतं सताम्।
त्यागोदग्रमिवैश्वर्यं शीलोज्ज्वलमिव श्रुतम्।। औचित्यविचारचर्चा 12 कारिका।
(घ:) तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुन: क्वापि। काव्यप्रकाश: 1, 4
(ङ:) यच्चोक्तं चारुत्वप्रतीतिस्तर्हि काव्यस्यात्मा स्यात् इति तदङ्गीकुर्म एवं नाम्नि खल्वयं विवाद इति ध्वन्यालोक: 1, 13 काव्यविशेष इति पदे अभिनवगुप्तकृता लोचनटीका।
(घ:) चमत्कारविशिष्टं शब्दार्थयुगलं काव्यमिति फलितम्। साहित्यबिन्दु: (छज्जूरामशास्त्रिकृत:) पृ. 5
(ङ:) चमत्कारिशब्दार्थौ काव्यमिति निर्दुष्टं लक्षणं ज्ञेयम्। वायुनन्दनपाण्डेयकृता साहित्यसिद्धान्तसमीक्षा।
(च:) ज्ञानात्मकेन शब्दाख्येनार्थेनार्थान्तरात्मक:।
य: कश्चन चमत्कारी बोध: काव्यं स उच्यते।।
अर्थबोधोऽर्थबोधानामन्येषां सन्ततिं सृजन्।
चमत्कारामृतं प्रोक्ष्य रसिके याति काव्यताम्।। रेवाप्रसादद्विवेदिकृता काव्यालङ्कारकारिका 190, 73 कारिके।
(छ:) रसभावचमत्कारान्यतमप्राणपेशल:।
काव्यं शब्दार्थसन्दर्भोऽलौकिकानन्दसुन्दर:।।
चमत्कार: शब्दार्थालङ्कारादीनां कुशलप्रयोगजन्या चित्तचमत्कृति:।। वागीश्वरविद्यालङ्कारकृता वैदिकसाहित्य: सौदामिनी 2, 6 तथा वृत्ति:।
2. (क:) काव्यस्य ललितोचितसन्निवेशचारुण: शरीरस्येवात्मा साररूपतया स्थित: सहृदयश्लाघ्यो योऽर्थ:। ध्वन्यालोक: 2, 1 वृत्ति:।
(ख:) स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम्। रसगङ्गाधर: प्रथमाननम्, काव्यलक्षणप्रकरणम्।

काव्ये काव्यत्वमेतद् वै गवि गोत्वमिव स्थितम्।
सर्वेषु काव्यभेदेषु लभ्यतेऽनुगतं हि तत्[1]॥16॥

चाकचक्यं विधत्ते यश्चेतस्सु वासनावताम्।
विचित्रवचनैस्तैस्तैः काव्यरूपकवर्तिभिः॥17॥

चितिरूपश्चमत्कारः प्रकाशानन्दनिर्भरः।
दीपयति तथा चित्तं कृष्णमेघं तडिद् यथा[2]॥18॥

चमत्करोति यः काव्ये चमत्कारः स उच्यते।
चमतोऽपरपर्याया दीप्तिकान्त्यादयः स्मृताः॥20॥

विद्यते यश्चमत्कारश्चमत्कारत्वजातिमान्।
लक्ष्यते सोऽपि सर्वत्र चमत्कारिषु वस्तुषु॥21॥

चमत्कारत्ववत्त्वस्य स्थिति र्यस्यात्र वर्तते।
तद्धि सर्वगता जातिः पदार्थोऽस्त्यथवा पृथक्॥22॥

अस्यैवापरपर्यायश्चमत्कारित्वमुच्यते।
अविशिष्टमिदं काव्ये नाट्ये लोके विलोक्यते[3]॥23॥

चमत्कारपदे तावच्चमत्कारत्वसंस्थितिः।
चमत्कारोऽप्ययं ह्यस्मिंश्चमत्कारिणि तिष्ठति॥24॥

चमत्कारिपदे ह्येवं जातिद्वयस्य सङ्करः।
सोऽखण्डोपाधिरेवास्य सङ्करस्यास्ति बाधकः॥25॥

अस्मिन् काव्यपदे चापि साङ्कर्यस्य निवारकः।
अखण्डोपाधिरेवासौ यश्चाकाशेऽपि वर्तते[4]॥26॥

---

1. अथवा काव्यत्वं नाम गोत्वादिवज्जातिरेव। यथा सास्नाद्यवयववतीषु गोव्यक्तिषु प्रत्येकमयं गौरयं गौरित्यनुगताकारा येनासाधारणधर्मेणावगतिः स एव जातिलक्षणः कोऽप्यसाधारणधर्मो गोत्वं तथा शब्दार्थसङ्घातस्य सहृदयहृदयास्वाद्यः कोऽपि काव्यत्वजातिलक्षणो धर्मविशेषः काव्यत्वम्। कविकर्णपूरकृतः अलङ्कारकौस्तुभः 1, 2 वृत्तिः।
2. विद्युत्समुन्मेष इवान्धकारे करोति या चेतसि चाकचक्यम्।
   वक्रोक्तिवैचित्र्यविरोधिताद्यैश्चितिश्चमत्कारपदोदितासौ॥
   कस्यचिदर्थस्य सहसाऽऽह्लादात्मिका चितिः प्रकाशः एव चमत्कारः।
   वागीश्वरकृतवैदिकसाहित्यसौदामिनी 2, 3 तथा वृत्तिः।
3. लोकोत्तरत्वं चाह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः। चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम्। काव्यजीवितं चमत्कारित्वं चाविशिष्टमेव। रसगङ्गाधरः प्रथमाननम्, काव्यलक्षणप्रकरणम्।
4. केचित्तु–

   अदोषौ तद्धि शब्दार्थौ सालङ्कारौ गुणान्वितौ।
   काव्येमेतदिति प्राहुरलङ्कारविशारदाः॥

काव्यगतश्चमत्कारो यः प्राधान्येन संस्थितः।
काव्यसारो मतः सोऽयं प्रोक्तोऽनुभवसाक्षिकः[1]॥27॥

रसादिजश्चमत्कारो यस्मिन्नसौ प्रतिष्ठते।
चमत्काररसं काव्यं काव्यं तद्बुधसम्मतम्[2]॥28॥

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकामवधीः काममोहिताम्[3]॥29॥

अत्र शोकात्समुत्पन्नः करुणोऽसौ रसध्वनिः।
जातश्चमत्कृतेस्तस्या हेतुरानन्ददायकः॥30॥

वनितेति वदन्त्येतां लोकाः सर्वे वदन्तु ते।
यूनां परिणता सेयं तपस्येति मतं मम[4]॥31॥

परस्परतपःसम्पत्फलायितपरस्परौ।
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः[5]॥32॥

तपस्यायाः फलं योषित् तपःफले उमाशिवौ।
रूपकोपमयोरस्मिंश्चमत्कारो विभाव्यते॥33॥

---

अदोषाविति – अत्र वदन्ति काव्यत्वं दण्डत्वादिवत् प्रत्येकं परिसमाप्यवृत्ति उत द्वित्वपृथक्त्ववद् व्यासज्यवृत्ति वा। नाद्यः केवले शब्दे केवलार्थे च तदव्यवहारात्। नापरः, देवदत्तप्रभवत्वादि न जातिः साङ्कर्यापत्त्या तादृशजात्यनङ्गीकारात्। न च तादृशजात्यङ्गीकारे साङ्कर्यशङ्केति वाच्यम् अखण्डोपाधेरेव स्वीकारात्। वस्तुतस्तु साङ्कर्यस्य दूषकताबीजाभावाददूषकत्वमेवेति ब्रूमः। विश्वनाथदेवविरचितसाहित्यसुधासिन्धुः 1, 4 वृत्तिः।

1. (कः) काव्यसारः – काव्यस्य सारः प्रधानभूतमात्मत्वरूपेण संस्थितं तत्त्वमित्यर्थः। वाक्यं रसात्मकं काव्यम्- रस एवात्मा साररूपतया जीवनाधायको यस्य साहित्यदर्पणः 1, 3 तथा वृत्तिः। इत्यत्र रसः काव्यसारः प्रतिपादितः अनया अनुकृत्या चमत्कारोऽपि काव्यसारत्वेनात्र स्वीक्रियते।
   (खः) काव्यस्य हि ललितोचितसन्निवेशचारुणः शरीरस्येवात्मा साररूपतया स्थितः सहृदयश्लाघ्यो योऽर्थः। ध्वन्यालोकः 1, 2 वृत्तिः।
   (गः) लोकोत्तरत्वं चाह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः। रसगङ्गाधरः प्रथमाननम्, काव्यलक्षणप्रकरणम्।
2. चमत्काररसमिति – चमत्कारो रसः सारः प्रधानतत्त्वं यस्मिन् तदिति तात्पर्यम्। अस्मिन् विषये चिरञ्जीवरामदेव-भट्टाचार्येण कथितम् – सत्यपि च रसादौ, विना विलक्षणचमत्कारमभिज्ञानां काव्यमिदमिति न प्रतीतिरपीति साधु वदन्ति। काव्यविलासः पृ. 3
3. ध्वन्यालोकः 1, 5 वृत्तिः।
4. पण्डितराजजगन्नाथकृतभामिनीविलासः 2, 117
5. अप्पयदीक्षितकृतः कुवलयानन्दः द्वितीया कारिका।

सुप्रयुक्ता कवे र्वाणी हृदयं हरति सत्वरम्।
धवला मालतीमाला लोकस्य कर्षति दृशम्॥34॥

वराङ्गनाङ्गसौन्दर्यैः सुवर्णै रत्नसङ्गतैः।
चमत्कृतिमयैः काव्यैश्चित्तमाकृष्यते नृणाम्॥35॥

चमत्कारमभिव्युक्तुं स्थापयितुं च तं मया।
इदं काव्यचमत्कारे लिखितं काव्यलक्षणम्[1]॥36॥



1. रामप्रतापकृतकाव्यचमत्कारः, तृतीय उल्लासः, काव्यलक्षणम् (यन्त्रस्थः)।

# ज्योतिषसंहितास्कन्धे कूर्मचक्रविचारः

प्रो॰ ( डॉ॰ ) ब्रजेशकुमार शुक्लः

अखिलं ज्यौतिषशास्त्रं शाखात्रयात्मकं सुधीभिराम्नातमिति सर्वैर्ज्ञायत एव। तत्र तिस्रः शाखा निगदिताः–सिद्धान्तशाखा, होराशाखा संहिताशाखा च।

देशराष्ट्रनगराणां भाविफलज्ञानाय संहितायां ग्रहचारः, विशिष्टनक्षत्रचारः, रोहिणीशकटभेदनयोगः, कूर्मचक्रविभागः, ग्रहभक्तियोगः, ग्रहयुद्धयोगः स्वातीयोगः, आषाढीयोगः, दिग्दाहोल्कापरिवेषेन्द्रायुप-गन्धर्वनगरोत्पातयोगाः प्रतिसूर्यलक्षणञ्चेत्पादयो विषया वरीवर्तन्ते। एष्वत्र कूर्मचक्रविभागमुपलक्ष्य किञ्चिदत्र विशदीकर्त्तव्यम्।

कूर्मचक्रस्य वर्णनं बृहत्संहितायां, गर्गसंहितायां, नारदसंहितायां नारदीयमहापुराणे, नरपतिजयचर्यायां चेत्यादिषु सम्प्राप्यते। सर्वत्र वर्णनेऽस्य वर्तत एकरूपता। संहितातिरिक्तं, नरपतिजयचर्यायां कूर्मपञ्चक-स्योल्लेखः प्राप्यते। तत्र कूर्मचक्रद्वारेण पृथिवीदेशनगरक्षेत्रग्रहाणां विचारो विधीयते। एतस्मात्पञ्च कूर्मचक्राणि तत्र निरूपितानि वर्तन्ते–

(क) पृथिवीकूर्मचक्रम्।

(ख) देशकूर्मचक्रम्।

(ग) नगरकूर्मचक्रम्।

(घ) क्षेत्रकूर्मचक्रम्।

(ङ) गृहकूर्मचक्रम्।[1]

संहितासु केवलं पृथिवीकूर्मचक्रस्य वर्णनमुपलभ्यते। कदाचिन्मूलभूतस्यैतत्कूर्मचक्रस्यैव विस्तरो देशनगरक्षेत्रगृहकूर्मचक्रत्वेनाऽकारि नरपतिजयचर्याकृता। आदौ विभिन्नसंहितासु निरूपितस्य पृथिवीकूर्म-चक्रस्य वर्णनमत्र क्रियते।

**पृथिवीकूर्मचक्रविभागः**

संहितासु सम्पूर्णस्य जगतः शुभाशुभविचारार्थं कूर्मचक्रे नक्षत्राणां न्यासः प्रकीर्तितः। कूर्माङ्गविभागेन

---

1. नरपतिजयचर्यायाम्, पृ. 109-114।

तत्र देशानां स्थितिर्निगदिता। नरपतिजयचर्यायां कूर्मचक्रवर्णनप्रसङ्गे कथितं यदेतस्य कूर्मचक्रस्य वर्णनं कोशलागमे विहितमेतज्ज्ञानेन देशस्य राष्ट्रस्य वा विप्लवः सम्यक्तया ज्ञातुं शक्यः–

**कूर्मचक्रं प्रवक्ष्यामि यदुक्तं कोशलागमे।**
**यस्य विज्ञानमात्रेण ज्ञायते देशविप्लवः॥**[1]

पृथिव्या मध्यप्रदेशे सुमेरुपर्वतोऽस्ति, यस्मिन् त्रयस्त्रिंशत्कोटिसङ्ख्यका देवा निवसन्ति। सुमेरुसदृशा अष्टौ पर्वताः सागरा द्वीपाश्च भूमौ दरीदृश्यन्ते। वराहावतारे भगवता विष्णुना स्वदंष्ट्र्या धरैषाऽधारि। तत्र वराहभगवता शेषनागमस्तके यथा पृथिवी धृताऽऽसीत्तथैव न्यधायि। पुनश्च शेषोऽपि कुण्डलीरूपो भूत्वा कूर्मपृष्ठे तस्थौ।[2] एष कूर्मो बहुविस्तरायामः सर्वासु दिक्षु स्वाङ्गानि प्रसारयामास। एतस्य कूर्मस्य वपुःप्रसारो दशशङ्कुमितयोजनात्मकस्तत्र कथितः। एतदर्धं पुच्छम्, पुच्छार्द्धं कुक्षिद्वयम्, सायुतकोटिमिता ग्रीवा, कोटिसङ्ख्य मुभयोर्नेत्रयोरस्य मध्यान्तरम्, कोटिद्वयं मुखम्, चतुष्कोटिप्रमाण–मस्य पदयोः, नखाङ्गुलीनां प्रमाणं च दश योजनात्मकं मन्यते। आदियामलागमे कूर्मस्यैतत्प्रमाणं निगदितं वर्तते।[3] एतस्य कूर्मस्योपरि सप्तद्वीपयुता पृथ्वी स्थिता। सर्वावयवसंयुक्तस्य कूर्मस्य मुखं पूर्वदिशि पुच्छञ्च पश्चिमाशायां कूर्मचक्रे लेखनीयम्–

**तस्योपरि स्थिता तत्र सर्वद्वीपयुता मही।**
**कूर्माकारं लिखेच्चक्रं सर्वावयवसंयुतम्।**
**पूर्वभागे मुखं तस्य पुच्छं पश्चिममण्डले॥**[4]

बृहत्संहितायां लिखितं यत् भारतदेशस्य नवधा विभाजनं कृत्वा तत्तद्विभागेषु कूर्माङ्गानि कल्पनीयानि। कृत्तिकातस्त्रीणि त्रीणि नक्षत्राणि तत्तद्विभागरूपेषु कूर्माङ्गेषु निधाय तत्र देशकल्पनां कुर्यात्–

**नक्षत्रत्रयवर्गैराग्नेयाद्यैर्व्यवस्थितैर्नवधा।**
**भारतवर्षे मध्यप्रागादिविभाजिता देशाः॥**[5]

नारदसंहितायां कूर्मचक्रविभागे धराया नवविभागाः कृताः–

**प्राङ्मुखस्य तु कूर्मस्य नवाङ्गेषु धरामिमाम्।**
**विभज्य नवधा खण्डमण्डलानि प्रदक्षिणम्॥**[6]

1. नरपतिजयचर्यायाम्, - कूर्मचक्रम्, श्लोकः - 1।
2. नरपतिजयचर्यायाम्, - कूर्मचक्रम्, श्लोकाः - 2-6।
3. नरपतिजयचर्यायाम्, - कूर्मचक्रम्, श्लोकाः - 7-10।
4. नरपतिजयचर्यायाम्, - कूर्मचक्रम्, श्लोकौ - 11-12।
5. बृहत्संहितायाम्, 14/1।
6. नारदसंहिता, 36/1।

नारदसंहितायां यादृशं कूर्मचक्रस्य वर्णनमुपलभ्यते तादृशं वर्णनं नारदीयमहापुराणेऽपि प्राप्यते। न केवलं तत्र विषयसाम्यं दृश्यतेऽपितु शब्दशः श्लोकसाम्यं नितरां चकास्ति। नारदीयमहापुराणेऽपि पृथिव्या नवभागाः विधातव्यास्तत्र कूर्माङ्गानि कल्पयेत्–

**प्राङ्मुखस्य तु कूर्मस्य नवाङ्गेषु धरामिमाम्।**
**विभज्य नवधा खण्डे मण्डलानि प्रदक्षिणम्॥**[1]

इत्थं विज्ञायते यत्कूर्मचक्रस्य प्रयोगः संहितासु द्विधा दरीदृश्यते–सर्वायाः पृथिव्याः जगतो वा नवधा विभाजनम्, देशविशेषस्य नवधा विभाजनञ्च। यत्र पृथिव्या नवधा विभागं कृत्वा कूर्माङ्गेषु नक्षत्रन्यासो विधीयते तत्राऽखिलस्य संसारस्य शुभाशुभफलत्वं ज्ञायते, यत्र च देशविशेषस्य नवभागकल्पनां विधाय कूर्मचक्रेषु विन्यासक्रमो लिख्यते तत्र देश विशेषस्य विप्लवादि दैवज्ञैर्विज्ञायते। संहिताकारैः कूर्मचक्रे देशविभाजनं भारतवर्षमवलम्ब्य विहितम्। कृत्तिकानक्षत्रतस्त्रीणि त्रीणि नक्षत्राणि विभागेषु स्थातव्यानि। एवं कूर्माङ्गेषु नक्षत्रन्यासोऽधोलिखितप्रकारेण सम्पद्यते–

**1. नाभिमण्डलम् (मध्यभागः)**

भारतवर्षस्य मध्यभागे कूर्मस्य नाभिमण्डलमस्ति, तत्र कृत्तिकारोहिणीमृगशिराख्यानि त्रीणि नक्षत्राणि वर्तन्ते। एतस्मिन् मध्यभागे भद्रारिमेदमाण्डव्यसाल्वनीपोज्जिहानसङ्ख्यातमरुभूवत्स-घोषयामुनसारस्वतमत्स्यमाध्यमिका देशा आयान्ति। माथुरकोपज्योतिषधर्मारण्यशूरसेनगौरग्रीव उद्देहिक-पाण्डुगुह्यऽश्वत्थपाञ्चालसाकेतकङ्ककुरुकालकोठिकुकुरपारियात्रौदुम्बरकापिष्ठलहस्तिनापुराख्याश्चाऽन्ये देशा मध्यभागे वर्तन्ते।[2]

नारदसंहितायां कूर्मस्य नाभिमण्डले अन्तर्वेदी (गङ्गायमुनयोर्मध्यभागः) पाञ्चालदेशश्च वर्तेत इति लिखितम्–

**अन्तर्वेदी च पाञ्चालं तस्येदं नाभिमण्डलम्।**[3]

पराशरेण भारतवर्षस्यमध्यदेशे आर्यावर्त आयातीति कथितं ततश्च वराहमिहिरोक्तदेशा एतस्याऽऽर्यावर्तस्य जनपदाः सन्तीत्युक्तम्।[4] नारदीयपुराणेऽपि अन्तर्वेदाः पाञ्चाला मध्यभाग ईरिताः।[5] नरपतिजयचर्यायां कथितं यत्कूर्मस्य मध्यभागे साकेतमिथिलाचम्पाकौशाम्बीकौशिकीगयाऽहिच्छत्र-विन्ध्यान्तर्वेदीमेखलाकान्यकुब्जप्रयागा वर्तन्ते। यदि कृत्तिकादित्रये शनिः पापग्रहो वा कश्चित् स्यात्तर्हि

---

1. नारदीयमहापुराणे पूर्वभागे 56/739-40।
2. बृहत्संहिता 14/2-4।
3. नारदसंहितायाम्, 36/1।
4. बृहत्संहिताया भट्टोत्पलकृतटीकायाम् प्रथमभागे, पृ. 260।
5. नारदीयमहापुराणे पूर्वभागे, 56/740।

समुद्धृतदेशेषु विप्लवाः भवन्ति देशा नश्यन्ति वा–

**कृत्तिकारोहिणी सौम्यं कूर्मनाभिगतं त्रयम्।**
**साकेतं मिथिला चम्पा कौशाम्बी कौशिकी तथा॥**

**अहिच्छत्रं गया विन्ध्यमन्तर्वेदी च मेखला।**
**कान्यकुब्जं प्रयागश्च मध्यदेशो विनश्यति॥**[1]

**2. मुखमण्डलम् ( पूर्वभागः )**

पूर्वस्यां दिशि कूर्मस्य मुखमण्डले नक्षत्राणि त्रीणि वर्तन्ते आर्द्रापुनर्वसुपुष्याख्यानि। वराहमिहिरेण पूर्वदिशायां ये देशाः सन्ति, तेषां नामानि बृहत्संहितायामलेखिषत–

**अथ पूर्वस्यामञ्जनवृषभध्वजपद्ममाल्यवद्गिरयः।**
**व्याघ्रमुखसुप्तकर्वटचान्द्रपुराः शूर्पकर्णाश्च॥**

**खसमगधशिविरगिरिमिथिलसमतटोड्राश्ववदतदन्तुरकाः।**
**प्राग्ज्योतिषलौहित्यक्षीरोदसमुद्रपुरुषादाः।**

**उदयगिरिभद्रगौडकपौण्ड्रोत्कलकाशिमेकलाम्बष्ठाः।**
**एकपदताम्रलिप्तककोशलका वर्धमानाश्च॥**[2]

उपर्युक्तदेशा कूर्मस्य मुखमण्डलेऽथवा भारतवर्षस्य पूर्वदिशायां विराजन्ते। नारदसंहितायां मगधलाटादिदेशा पूर्वभागे कथिताः–

**प्राच्यां मागधलाटादिदेशास्तन्मुखमण्डलम्।**[3]

नारदमहापुराणेऽप्येतादृशमेवोक्तं वर्तते–

**प्राच्या मागधलाटोत्था देशास्तन्मुखमण्डलम्।**[4]

नरपतिजयचर्यायां कूर्मस्य शिरसि पूर्वस्यां गौडहस्तिबन्धपञ्चराष्ट्रकामरूपचरेन्द्रीमागध-रेवातटनेपालादिदेशाः स्थिताः। अत्र स्थितेषु नक्षत्रेषु पापग्रहः शनिर्वाऽऽगच्छति वेधते वा तदा एतेषां देशानां पीडा ज्ञातव्या–

---

1. नरपतिजयचर्यायाम्, - कूर्मचक्रम् - श्लोकौ - 16-17।
2. बृहत्संहितायाम्, 14/5-6।
3. नारदसंहितायां, 36/2।
4. नारदीयमहापुराणे पूर्वभागे, 56/741।

**रौद्रं पुनर्वसुः पुष्यं कूर्मस्य शिरसि स्थितम्।**
**सगौडो हस्तिबन्धश्च पञ्चराष्ट्रं च कामरुः।।**
**चरेन्द्री च तथा ज्ञेया मगधश्च तथैव च।**
**रेवातटं च नेपालः पूर्वदेशो विनश्यति।।**[1]

एवं वराहमिहिरेण समाससंहितायामपि पूर्वदेशा समासेनोक्तास्ते सुधीभिर्द्रष्टव्याः।[2]

### 3. दक्षिणबाहुमण्डलम् (आग्नेयभागः)

आग्नेयदिशि कूर्मस्य दक्षिणबाहुमण्डलं वर्तते। तत्राऽऽश्लेषामघापूर्वाफाल्गुनीति नामधेयानि त्रीणि भानि न्यस्तानि। आग्नेयाशायां ये देशाः संस्थितास्तेषां नामानि विस्तरतया बृहत्संहिताकारेण समुद्धृतानि।[3]

बृहत्संहिताऽपेक्षया समाससंहितायामाग्नेयदिशि स्थितानां देशानां नामान्यधिकस्पष्टतयोल्लिखितानि–

**आश्लेषाद्ये त्रिपुरी निषादराष्ट्राणि चेदिकदशार्णाः।**
**शूलिकविन्ध्यान्तःस्था वत्सान्ध्रविदर्भकालिङ्गाः।।**[4]

नारदसंहितायां कूर्मस्य दक्षिणबाहुमण्डले स्त्रीकलेयकिरातनामधेयाः देशाः स्थिताः सन्ति–

**स्त्रीकलेयकिराताख्या देशास्तद्बाहुमण्डलम्।।**[5]

नारदसंहितानुसारमेव नारदीयमहापुराणेऽप्युक्तम्। अत्र स्त्रीदेशः, कलिङ्गदेशः किरातदेशश्चोल्लिखिताः–

**स्त्रीकलिङ्गकिराताख्या देशास्तद्बाहुमण्डलम्।**[6]

नरपतिजयचर्यायां कूर्मस्यैतस्मिन्नङ्गेऽङ्गवङ्गकलिङ्गदेशाः, कोशलडाहलीजयन्ती सुलञ्जिकोडियामवराडादिदेशाः सन्ति। पापग्रहाणां वेधे युतौ वा देशा एते विपत्तियुक्ताः भवन्ति–

**आश्लेषा च मघा पूर्वा पादे आग्नेयगोचरे।**
**अङ्गवङ्गकलिङ्गाश्च पूर्वजाश्चैव कोसलाः।।**

1. नरपतिजयचर्यायाम्, - कूर्मचक्रम् - 18-19 श्लोकौ।
2. बृहत्संहिताया भट्टोत्पलकृतटीकायाम् पूर्वभागे, पृ. 267।
3. बृहत्संहितायां, 14/8-10।
4. बृहत्संहिताया भट्टोत्पलकृतटीकायां पूर्वभागे, पृ. 267।
5. नारदसंहितायाम्, 36/2।
6. नारदमहापुराणे पूर्वभागे, 56/741।

**डाहली च जयन्ती च तथा चैव सुलञ्जिका।**
**उडियामं वराडं च अग्निदेशो विनश्यति॥[1]**

भटोत्पलेन बृहत्संहिताविकृतौ देशानामेतेषां नामानि विशदीकृत्य पराशरमुनेर्देशनामान्यपि समुल्लिखितानि।[2] एतस्माज्ज्ञायते यत् काचित्पराशरसंहिताऽपि ज्योतिषस्याऽऽसीद् या नेदानीमुपलभ्यते।

## 4. दक्षिणकुक्षिमण्डलम् ( दक्षिणभागः )

दक्षिणस्यां दिशि कूर्मस्य दक्षिणकुक्षिमण्डलं राराज्यते। एतस्मिन्नुत्तराफाल्गुनीहस्तचित्रेति नक्षत्र-त्रयमभिन्यस्तम्। दक्षिणाशायां वराहमिहिरेणाऽभ्यधायिषत बहवो देशास्तत्रबृहत्संहितायाम्।[3] अतिविस्तृत-त्वादेतस्य देशवर्णनस्याऽत्र समाससंहितामवलम्ब्य समासेन देशा उच्यन्ते–

**आर्यम्णाद्ये चैदिककोङ्कणवनवासिकोल्लगिरिमलयाः।**
**उज्जयिनीभरुकच्छा दिशा च याम्यार्णवो यावत्॥[4]**

कूर्मस्य दक्षिणकुक्षिमण्डले अवन्तीद्राविडभिल्लदेशाः स्थिताः इत्युक्तं नारदसंहितायाम्।[5] नारदमहापुराणेऽपि कथितम्–

**अवन्ती द्रविडा भिल्ला देशास्तत्पार्श्वमण्डलम्।[6]**

नरपतिजयचर्यायामुक्तं यत् कूर्मस्य दक्षिणपार्श्वमण्डले दर्दुरमहेन्द्रवनवाससिंहलतापीभीमरथी लङ्कात्रिकूटमलयश्रीपर्वतकिष्किन्धादिदेशाः वर्तन्ते। यदैतस्मिन्नक्षत्रत्रये पापग्रहो वेधते गोचरीभवति वा तदैषां देशानां पीडा जायते–

**उत्तराहस्तचित्राश्च दक्षिणां कुक्षिमागताः।**
**दर्दुरं च महेन्द्रं च वनवासं ससिंहलम्॥**

**तापी भीमरथी लङ्का त्रिकूटं मलयस्तथा।**
**श्रीपर्वतश्च किष्किन्धा इति नश्यन्ति दक्षिणे॥[7]**

एवं कूर्मस्य दक्षिणपार्श्वमण्डले देशाः समाख्याताः।

---

1. नरपतिजयचर्यायाम्, - कूर्मचक्रम् - 21-22 श्लोकौ।
2. बृहत्संहिताया भट्टोत्पलकृतौ पूर्वभागे, पृ. 261-262।
3. बृहत्संहितायाम्, 14/11-16।
4. बृहत्संहिताया भट्टोत्पलविकृतौ प्रथमभागे, पृ. 267।
5. नारदसंहितायाम्, 36/3।
6. नारदमहापुराणे पूर्वभागे, 56/742।
7. नरपतिजयचर्यायाम् - कूर्मचक्रम् - श्लोकौ - 23-24।

**5. दक्षिणपादमण्डलम् ( नैर्ऋत्यभागः )**

नैर्ऋत्यदिशायां कूर्मस्यदक्षिणपादे स्वातीविशाखाऽनुराधाख्याति त्रीणि नक्षत्राणि संस्थितानि। नैर्ऋत्यां दिशि स्थितानां देशानामुल्लेखो वराहमिहिरेणैवमकारि–

नारदसंहितायां कूर्मस्यदक्षिणपादमण्डले देशाःसन्ति–गौडकौङ्कणशाल्वेष्टपुण्ड्राः।[1] नारदपुराणे कथितम्–

**गौडकौङ्कणशाल्वाङ्घ्रापौण्ड्रस्तत्पादमण्डलम्।[2]**

नरपतिजयचर्यायां दक्षिणपादमण्डले कूर्मस्य ये देशाः स्थानं लेभिरे तेषां नामान्युद्धृतानि–

**स्वाती विशाखा मैत्रं च कूर्मे नैर्ऋतिगोचरे।**
**नासिक्यं च सुराष्ट्रं च धृतमालवकं तथा।।**

**पर्पली च प्रकाशञ्च भृगुकच्छं च कोङ्कणम्।**
**खेटापुरं च मोटेरं देशा नश्यन्ति तादृशाः।।[3]**

उपर्युक्तेषु नक्षत्रेषु यदि पापग्रहाः स्युस्तर्हि देशा एते विप्लवग्रस्ता भवन्ति। अपि च वराहमिहिरेण समाससंहितायां कूर्मस्य दक्षिणपादमण्डले स्थितानां देशानमुल्लेखोऽकारि।[4]

**6. पुच्छमण्डलम् ( पश्चिमभागः )**

कूर्मचक्रस्य पश्चिमभागे कूर्मस्य पुच्छं वर्तते तत्र ज्येष्ठामूलपूर्वाषाढाः इत्याख्यानि त्रीणि नक्षत्राणि समारोपितानि।

नरपतिजयचर्यायामुक्तं यद् यदा ज्येष्ठामूलपूर्वाषाढानक्षत्रे कश्चित्पापग्रहोवेधतेऽथवा गोचरतां याति तदा कूर्मपुच्छे स्थिता पारावतमरुत्कच्छावन्तीपूर्वमालवपारासरवर्वरसौराष्ट्रसैन्धवदेशाः स्त्रीराज्यञ्च विनाशं यान्ति–

**ज्येष्ठामूलं तथाषाढा पुच्छे कूर्मस्य संस्थिताः।**
**पारावतं मरुत्कच्छमवन्तीपूर्वमालवम्।।**

---

1. नारदसंहितायाम्, 36/3।
2. नारदमहापुराणे पूर्वभागे, 56/742।
3. नरपतिजयचर्यायाम्, - कूर्मचक्रम् - श्लोकौ - 25-26।
4. बृहत्संहितायां (भट्टोत्पलविकृतौ) प्रथमभागे, पृ. 267।

**पारासरं वर्वरं च द्वीपं सौराष्ट्रसैन्धवम्।**
**जलस्थाश्च विनश्यन्ति स्त्रीराज्यं पुच्छपीडने॥**[1]

नारदसंहितायां पुच्छभागे सिन्धुकाशीमहाराष्ट्रसौराष्ट्रदेशाः स्थिताः इति कथितम्–

**सिन्धुकाशीमहाराष्ट्रसौराष्ट्राः पुच्छमण्डलम्।**[2]

नारदमहापुराणेऽपि लिखितं वर्तते–

**सिन्धुकाशिमहाराष्ट्रसौराष्ट्राः पुच्छमण्डलम्।**[3]

यद्यपि वराहमिहिरेण काशिदेशो मुखमण्डले पूर्वस्यां दिशि पठितः किन्तु नारदसंहितानारद-पुराणयोः काशीदेशः पश्चिमायां पुच्छे समुद्धृत इति महान् दोष आपद्यते। कदाचित्काशिदेशः कश्चिदन्यःपश्चिमभागे पुरा रेजे तस्यैवोल्लेखोऽत्र विहितः। वराहमिहिरोऽत्र समाससंहितायां देशाभि-धानेषु नोल्लिलेख काशिदेशम्।[4]

### 7. वामपादमण्डलम् ( वायव्यभागः )

वायव्याशायां कूर्मस्य वामपादमण्डलं विराजते। तत्रोत्तराषाढश्रवणधनिष्ठाभानि निहितानि। बृहत्संहितायां वराहमिहिरो देशान् जनपदांश्चाह–

**दिशि पश्चिमोत्तरस्यां माण्डव्यतुषारतालहलमद्राः।**
**अश्मककुलूतहलडा स्त्रीराज्यनृसिंहवनखस्थाः॥**

**वेणुमती फल्गुलुका गुलुहा मरुकुच्चचर्मरङ्गाख्याः।**
**एकविलोचनशूलिकदीर्घग्रीवास्य केशाश्च॥**[5]

नारदसंहितायां कूर्मस्य वामपादमण्डले पुलिन्दभीष्मयवनगुर्जरदेशाः अभिहिताः।[6] नारदमहा-पुराणेऽप्येतादृश उल्लेखः प्राप्यते–

**पुलिन्दचीनयवनगुर्जराः पादमण्डलम्।**[7]

---

1. नरपतिजयचर्यायाम्, - कूर्मचक्रम् - श्लोकौ - 27-28।
2. नारदसंहितायाम्, 36/4।
3. नारदमहापुराणे पूर्वभागे, 56/743।
4. बृहत्संहितायां (भट्टोत्पलविकृतौ) पृ. 267।
5. बृहत्संहितायाम्, 14/22-23।
6. पुलिन्दभीष्मयवनगुर्जराःपादमण्डलम्। (नारदसंहितायाम् 36/4)।
7. नारदमहापुराणे पूर्वभागे, 56/743।

नारदसंहिताया भीष्मदेशस्य स्थानेऽत्र चीनदेशोऽभ्यधापि नारदपुराणकृता। नरपतिजयचर्यायां कूर्मस्य वामपादे गुर्जरयामुनमरुसरस्वतीजालन्धरवराटमेरुशृङ्गादिदेशाः प्रकल्पिताः। अत्रत्यनक्षत्रपीडने सति देशा एते पीडामनुभवन्ति–

**उत्तराषाढभत्रीणि पादे वायव्यगोचरे।**
**गुर्जराह्वं यामुनं च मरुदेशं सरस्वती।**
**जालन्धरं वराटञ्च बालुकोदधिसंप्रतम्।**
**मेरुशृङ्गं विनश्यन्ति ये चान्ये कोणसंस्थिताः॥[1]**

समाससंहितायां वराहमिहिरेण समासतो देशनामान्यभिहितानि तत्रैव द्रष्टव्यानि।[2]

**8. वामकुक्षिमण्डलम् ( उत्तरभागः )**

कूर्मस्य वामकुक्षिमण्डले सौम्यभागे शततारकपूर्वाभाद्रपदोत्तराभाद्रपदाख्यानि त्रीणि नक्षत्राणि वर्तन्ते। तत्र स्थिता बहवो देशा बृहत्संहितायामुक्ता[3], विस्तरभियाऽत्र न ते सर्वे समुच्यन्ते। समाससंहितायां सौम्यभागस्थितानां देशानां सङ्क्षिप्ततयोल्लेखोऽभूत्–

**शतभिषगाद्ये केकयगान्धारादर्शयामुनाग्नीध्राः।**
**दासेयचिपिटनासार्जुनायना दण्डपिङ्गलकाः॥[4]**

नारदसंहिताकारेण कूर्मस्य वामकुक्षिमण्डले कुरुकाश्मीरमाद्रेयमत्स्यदेशाः सन्तीत्युक्तम्–

**कुरुकाश्मीरमाद्रेयमत्स्यास्तत्पार्श्वमण्डलम्॥[5]**

नारदसंहितानुसारमेव नारदमहापुराणेऽप्यभिहितम्।[6] नरपतिजयचर्यायां समुद्धृतं यत् कूर्मस्य वामकुक्षिमण्डले नेपालकीरकाश्मीरगृञ्जतखुरसानमाथुरम्लेच्छदेशखशकेदारमण्डलहिमालयाश्रितदेशाः वर्तन्ते। एषु त्रिषु नक्षत्रेषु पीडितेषु देशा इमे पीडायुक्ता भवन्ति–

**शतभादित्रयं चैव उत्तरां कुक्षिमाश्रितम्।**
**नैपालं कीरकाश्मीरं गृञ्जनं खुरसानकम्॥**

---

1. नरपतिजयचर्यायाम्, - कूर्मचक्रम् - श्लोकौ - 29-30।
2. बृहत्संहितायां (भट्टोत्पलविकृतौ) प्रथमभागे, पृ. 267।
3. बृहत्संहितायाम्, 14/24-28।
4. बृहत्संहितायां (भट्टोत्पलविकृतौ) पृ. 267।
5. नारदसंहितायाम्, 36/5।
6. नारदमहापुराणे पूर्वभागे, 56/744।

**माथुरं म्लेच्छदेशश्च खशं केदारमण्डलम्।**
**हिमाश्रयाश्च नश्यन्ति देशा ये चोत्तराश्रिताः॥[1]**

कूर्मस्य मुखमण्डलेऽपि नेपालदेश उल्लिखितस्ततश्चाऽत्रापि वामकुक्षिमण्डले नेपालदेशस्य संस्थितिः कथिता। एतेन कदाचित्पूर्वनेपालदेशोऽथचोत्तरनेपालदेश उक्तौ स्तः।

### 9. वामबाहुमण्डलम् ( ईशानभागः )

ईशानकोणे कूर्मस्य वामबाहुमण्डलं विराजते, तत्र रेवत्यश्विनीभरणीनामधेयानि त्रीणि नक्षत्राण्य-भिन्यस्तानि सन्ति। ईशानदिशायां देशविभागो बृहत्संहितायामेवमभिहितः—

**ऐशान्यां मेरुकनष्टराज्यपशुपालकीरकाश्मीरः।**
**अभिसारदरदतङ्गणकूलूतसैरिन्ध्रवनराष्ट्राः॥**

**ब्रह्मपुरदार्वडामरवनराज्यकिरातचीनकौणिन्दाः।**
**भल्लाः पटोलजटासुरकुनटखशघोषकुचिकाख्याः॥**

**एकचरणानुविद्धाः सुवर्णभूर्वसुधनं दिविष्ठाश्च।**
**पौरवचीटनिवासित्रिनेत्रमुञ्जाद्रिगान्धर्वाः॥[2]**

नारदसंहितायां नारदपुराणे च काश्मीरदेशः कूर्मस्य वामकुक्षिमण्डले स्थित इति लिखितं, परन्तु बृहत्ससंहिताकारेण वामबाहुमण्डले काश्मीरदेशो निहित इत्यत्र विप्रतिपत्तिर्दृश्यते। एतद्भवितुं शक्यते यदेष देशो वराहमिहिरसमये ईशानदिशि स्थितो भवेत्पुनश्चोत्तरभागे जनैरुच्यतेऽयं देशः काश्मीराभिधानत्वेन। नारदसंहितायां कूर्मस्य वामबाहुमण्डले खशाङ्गबङ्गबाह्लीककाम्बोजदेशा लिखिताः—

**खशाङ्गबङ्गबाह्लीककाम्बोजाः पाणिमण्डलम्।[3]**

नारदमहापुराणे[4]ऽप्येतादृशोल्लेखत्वान्नाति वैशिष्ट्यं किञ्चित्। नरपतिजयचर्यायां समुल्लिखितं यत् कूर्मस्य वामबाहौ गङ्गाद्वारकुरुक्षेत्रश्रीकण्ठहस्तिनापुराश्वचक्रैकपादगजकर्णाख्या देशा अभिन्यस्ताः। रेवत्यश्विनीभरणीभेषु पीडितेषु देशा एते निश्चप्रचमेव विप्लवग्रस्ता भवन्ति—

**रेवती अश्विनी याम्यं पादे ईशानगोचरे।**
**गङ्गाद्वारं कुरुक्षेत्रं श्रीकण्ठं हस्तिनापुरम्॥**

---

1. नरपतिजयचर्यायाम्, - कूर्मचक्रम् - श्लोकौ - 31-32।
2. बृहत्संहितायाम्, 14/29-31।
3. नारदसंहितायाम्, 36/5।
4. नारदमहापुराणे पूर्वभागे, 56/744।

**अश्वचक्रैकपादाश्च गजकर्णास्तथैव च।**
**विनश्यन्ति च ते सर्वे शनावीशानगोचरे॥**[1]

समाससंहितायामपि वराहमिहिरेण काश्मीरदेश उदलेखि।[2] एवं कच्छपस्य वामपाणिमण्डले देशानां विभागः संहिताकारैरभ्यधापि।

अनेन कूर्मचक्रविभागेन प्रतीयते यद् ये देशा वराहमिहिराचार्येण कथितास्तेषु कतिपये देशास्त-स्यामाशायामिदानीं न वर्तन्ते यस्यां दिशि तेनोक्ताः। तदानीं बृहत्तरभारतस्य कल्पनाऽऽसीद् देशानां विस्तृतिर्दिगनुसारं भिन्नेव दरीदृश्यते स्म। नक्षत्राणां त्रिके पापग्रहस्थितिवशात्फलाफलं तेषां देशानां ज्ञायते, यथोक्तं नारदसंहितायाम्—

**कृत्तिकादीनि धिष्ण्यानि त्रीणि त्रीणि क्रमान्न्यसेत्।**
**नाभेर्दिक्षु नवाङ्गेषु पापैर्दुष्टं शुभैः शुभम्॥**[3]

वराहमिहिरेणाऽवोचि यत् कृत्तिकादित्रये पाञ्चालनृपः, आर्द्रादित्रये मागधिकराजा, आश्लेषादित्रये कालिङ्गः, उत्तराफाल्गुन्यादित्रये आवन्तः, स्वात्यादित्रये आनर्त्तः, ज्येष्ठादित्रये सिन्धुसौवीरः, उत्तराषाढादित्रये हारहौरराजा, शतभिषादित्रये मद्राधिपः, रेवत्यादित्रये च कौणिन्दनृपो मरणं यान्ति—

**वर्गैराग्नेयाद्यैः क्रूरग्रहपीडितैः क्रमेण नृपाः।**
**पाञ्चालो मागधिकः कालिङ्गश्च क्षयं यान्ति॥**

**आवन्तोऽथानर्तो मृत्युं चायाति सिन्धुसौवीरः।**
**राजा च हारहौरो मद्रेशोऽन्यश्च कौणिन्दः॥**[4]

नरपतिजयचर्यायां लिखितं यद् यस्मिन् देशे शनेर्वेधो युतिर्वा कूर्मचक्रवशाद्भवेत्तस्य देशस्य यत्नेन रक्षां कुर्यात्। परदेशे चेच्छनिः स्यात्तर्हि तस्योपरि राजाऽऽक्रमणं विधाय तं देशं जयेत्। यस्य देशस्य नाम नक्षत्रे शनिः स्यात्तस्याऽवश्यमेव छत्रभङ्गो जायते।[5]

एतत्पृथिवीकूर्मचक्रमभिधाय सर्वाः ज्योतिषसंहिता विरामत्वमुपगताः परन्तु नरपतिजयचर्यायां[6] कूर्मचक्रस्य देशनगरग्रामक्षेत्रगृहवशादन्ये भेदा निगदितास्तेऽत्र समासेनोच्यन्ते।

---

1. नरपतिजयचर्यायाम्, - कूर्मचक्रम् - श्लोकौ - 33-34।
2. बृहत्संहितायां (भट्टोत्पलविकृतौ) प्रथम भागे, पृ. 267।
3. नारदसंहितायाम्, 36/6।
4. बृहत्संहितायाम्, 14/32-33।
5. सौरिः स्वदेशगो यत्र तत्र यत्नेन रक्षयेत्। परदेशस्थिते कुर्याद्विग्रहं पृथिवीपतिः॥ यत्रस्थः पीडयेत्तत्र वेधस्थाने तथैव च। देशनामर्क्षगः सौरिभङ्गदातान संशयः॥ (नरपतिजयचर्यायाम्, - कूर्मचक्रम् - श्लोकौ - 35-36)।
6. नरपतिजयचर्यायाम्, - कूर्मचक्रम् - श्लोकः - 37।

**देशकूर्मचक्रविभाग:**

कूर्मचक्रं पूर्ववद् लिखित्वा देशनामनक्षत्रादित्रयं मध्ये स्थापयेत्तत: मुखादिष्वङ्गेषु नक्षत्राणि त्रीणि-त्रीणि निधाय पश्येद् यत्र शनैश्चर: कश्चिद् पापग्रहो वा भवेदथवा वेधोऽस्य वर्तते तस्मिन् स्थाने नगरे वा महान् क्लेशो भविष्यतीति चिन्तयेत्।[1] अत्रापि कूर्मचक्रानुसारेण प्राच्यादिदिक्क्रमेण नक्षत्रन्यासो देशे भवेत्।

**नगरकूर्मचक्रविभाग:**

पृथिवी कूर्मचक्रवन्नगरे कूर्मं विलिख्य तन्नगरनक्षत्रतस्त्रीणि त्रीणि धिष्ण्यानि मध्ये नाभ्यादौ न्यासीकृत्य विचारयेद् यद् युत्र शनैश्चरस्य यति: स्याद् वेधो वा भवेत्तत्र स्थानेऽवश्यमेव किञ्चिद् दुर्घटनं सम्पद्यते। यथोक्तम्–

**नगरे नागरं धिष्ण्यं कृत्वादौ विलिखेत्तत:।**
**सौरिस्थाने भवेद्दुष्टं वेधस्थाने तथैव च।।[2]**

**क्षेत्रकूर्मचक्रविभाग:**

कस्मिंश्चिद् विशेषक्षेत्रेऽथवा सस्यक्षेत्रे कूर्मचक्रं प्राच्यादिक्रमेण साङ्गं विलिख्य क्षेत्रनक्षत्रतस्त्रीणि नक्षत्राणि मध्यभागे विनिक्षिप्य शेषाणि भानि यथाक्रममङ्गेषु विन्यासीकर्त्तव्यानि–यत्र शनैश्चरो वेधते, गोचरतां वाऽऽयाति तत्र क्षेत्रे विनाशो भयञ्च जायते–

**क्षेत्रजे क्षेत्रभान्यादौ कृत्वा कूर्मं यथास्थितम्।**
**सौरिस्थाने विनाश: स्याज्जायते च महद्भयम्।।[3]**

**गृहकूर्मचक्रविभाग:**

गृहद्वारे कूर्मस्य मुखं निधाय गृहनामर्क्षाणि त्रीणि गृहमध्येऽवस्थाप्य पुन: कूर्माङ्गमुखादिक्रमेण त्रीणि त्रीणि भानि स्थापनीयाति। ततश्च शनेगोचरवशाद् वेधवशाच्च शुभाशुभं जानीयात्–

**गृहकूर्मं समालिख्य गृहद्वारमुखस्थितम्।**
**गृहनामर्क्षपूर्वं तु कृत्वा वीक्ष्यं शुभाशुभम्।।[4]**

---

1. नरपतिजयचर्यायाम्, - कूर्मचक्रम् - श्लोक: - 38।
2. तत्रैव - कूर्मचक्रम् - श्लोक: - 39।
3. तत्रैव - कूर्मचक्रम् - श्लोक: - 41।
4. तत्रैव - कूर्मचक्रम् - श्लोक: - 42।

नरपतिजयचर्यायां गृहकूर्मस्याङ्गविभागे शनेर्युतिवेधयोर्वशाच्छुभाशुभं निरूपितं वर्तते। यदि शनिर्गृहमध्येऽस्ति तर्हि शोकसन्तापो भवति, द्वारे वज्रपातः, महानसेऽग्निस्थानेवाऽग्निभयदायी, दक्षिणे मृत्युप्रदो, राक्षसभयं नैर्ऋतौ च करोति। पश्चिमे शनिः शुभप्रदो वायव्ये शून्यदोऽर्थदश्चोत्तरे भवति। शनिरीशानकोणे स्थितश्चेत्तर्हि सर्वसिद्धिप्रदाता भवेत्। यदि शनिर्वलिष्ठः स्यात्तर्हि प्रचुरतया द्रष्टं फलं प्रयच्छति स्वल्पवीर्यश्च शुभतां ददाति। एवमत्र गृहकूर्मचक्रस्य विभागे शनिवशात्फलमुक्तम्।

**ग्रामकूर्मचक्रविभागः**

ग्रामस्य नक्षत्रादित्रयं मध्यभागे निधाय पूर्ववत् कूर्माङ्गेषु मुखादिक्रमेण पूर्वादिक्रमेण वा त्रीणि त्रीणि भानि निधातव्यानि। यत्र शनेर्वेधो युतिर्वा स्यात्तर्हि ग्रामे भवेदुपद्रव इति चिन्त्यम्। यथोक्तम्–

**ग्रामकूर्मं समालिख्य ग्रामनामर्क्षपूर्वकम्।**
**पूर्ववद्यत्रगः सौरिर्मध्यादौ भङ्गमादिशेत्।।**[1]

इत्थं कूर्मचक्रस्य पञ्चकस्योल्लेखं कृत्वा नरपतिजयचर्यायां कथितं यद् यदा कूर्मपञ्चके एकस्मिन्नेव स्थाने सौरिः स्यात्तदा तत्स्थानस्य विनाशोभङ्गो वाऽवश्यम्भावी मन्यते।[2] कूर्मचक्रजनितोपद्रवशान्तये शान्तिककर्माणि यानि यामलतन्त्रे लिखितानि तानि सम्पादनीयानि वर्तन्ते। अनेन स्वल्पविघ्ना भवन्ति विप्लवशान्तिर्वा भवतीति।[3] संहितासु कूर्मचक्रप्रसङ्गे वेधस्योल्लेखो नाऽभूत्परन्तु नरपतिजयचर्याग्रन्थे कथितं यद् पूर्वप्रतीच्यां, सौम्यदक्षिणे, ईशाननैर्ऋत्यां, वह्निकोणवायुकोणे च वेधो भवेत्–

**पूर्वापरं लिखेद्वेधं वेधं चोत्तरदक्षिणे।**
**ईशानराक्षसे वेधं वेधमाग्नेयमारुते।।**[4]

इत्थं पृथिव्यां देशे, नगरे, ग्रामे, क्षेत्रे गृहे वा कूर्मचक्रं विलिख्य तत्र कूर्माङ्गेषु उक्तक्रमेण नक्षत्रन्यासं परिकल्प्य शन्यादिपापग्रहवशाच्छुभाशुभफलं विचारयेत्। यदि शनेरुपरि पापग्रहाणामुपरि वा बृहस्पते वेधो भवेदथवा यत्र शनिस्तत्र गुरोर्युतिश्च स्यात्तर्हि पापग्रहस्य शनेर्वाऽशुभफलत्वं क्षीणतां ब्रजति न्यूनत्वं वा याति। एवं संसारस्य पृथिव्याश्च शुभाशुभं संहितोक्तदिशा कूर्मचक्रेण ज्ञातव्यमिति सर्वेषां विपश्चितां पुरातनदैवज्ञानां च मतमत्र सुष्ठु प्रपञ्चितम्। कूर्मचक्रस्योल्लेखो जैनीयभद्रबाहुसंहितायां न प्राप्यते। अत एव जैनबौद्धज्योतिषशास्त्रयोरेतस्य प्रचारो नाऽऽसीदिति सम्यगुररीकर्तुं शक्यते तत्संहितासु कूर्मचक्रस्याऽनुपलब्धेरिति।

---

1. नरपतिजयचर्यायाम्, - कूर्मचक्रम् - श्लोकः - 40।
2. तत्रैव - कूर्मचक्रम् - श्लोकः - 46।
3. तत्रैव - कूर्मचक्रम् - श्लोकौ - 47-48।
4. तत्रैव - कूर्मचक्रम् - श्लोकः - 13।

# भर्तृहरिमते शब्दब्रह्मणः स्वरूपम्

**प्रो॰ कामदेवझा**

शब्दब्रह्मणः चिन्तनं वैदिककाल एव प्रारब्धमिति नास्त्यत्र सन्देहावकाशः। ऋग्वेदस्य महादेवो मर्त्यां आविवेश[1] इत्यनेनोद्धरणेनावगम्यते यत् शब्दब्रह्मणः परिकल्पना तत्रैव समुद्भूतेति। व्याकरणस्य प्रयोजनवर्णनावसरे मन्त्रस्यास्य व्याख्यायां भाष्यकृता व्याख्यातं महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणमि[2]त्यनेनाप्यत्र समुपलभ्यते। इत्यनेन प्रतीयते यत् शब्दब्रह्मणः समुल्लेखस्तत्र व्याकरणदर्शन-सम्प्रदाये प्रारब्धो जात इति। अस्यैव मन्त्रस्य भावं विस्तारयन् भर्तृहरिस्त्वत्र–

**अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।**
**प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते।।**[3]

शब्दब्रह्मणः चिन्तनमिदं यद्यपि वैदिककाले समुद्भूतं किन्तु शब्दब्रह्मेति शब्देन सर्वप्रथम-प्रयोगः उपनिषदि दृश्यते। तद्यथा–

**द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।**
**शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति।।**[4]

एतदप्यत्र स्पष्टीकरणीयं यत् उपनिषदः शब्दब्रह्मेदं भर्तृहरिमते परमतत्त्वं नास्ति, किन्तु भर्तृहरेः शब्दब्रह्म सर्वथा विश्वातीतं परमतत्त्वं वेति विद्यते। नास्त्यत्र काऽपि विचिकित्सेति। यद्यपि भर्तृहरेः पूर्वमपि शब्दब्रह्मणः विचारः प्रकारान्तरेण भाष्यकृता प्रकटीकृत आसीत्, किन्तु भर्तृहरिणा व्यासरूपेण सर्वादौ वाक्यपदीयब्रह्मकाण्डे शब्दतत्त्वं व्याख्यातमिति।[5]

भर्तृहरिणा वाक्यपदीयगतब्रह्मकाण्डे प्राथम्येन शब्दतत्त्वमेव व्याकृतम्। शब्दतत्त्वस्य कीदृशं स्वरूपमस्ति एतदप्यत्र प्रतिपादितम्। वस्तुतः तच्छब्दब्रह्माऽदिनिधनरहितमस्ति। अतएव तु निगद्यते यत् आदिनिधनरहितत्वे सति सदावर्तमानत्वं ब्रह्मणः सामान्यलक्षणमिति। एतल्लक्षणं शब्देऽपि समन्वेति। अतएव शब्दोऽप्यत्र ब्रह्मेति भावः।

यथा प्रस्तुतमस्ति तत्र–

1. ऋग्वेदः, 4.58.3।
2. महाभाष्यम्, प्रथमाह्निके पृ.सं. 12 (चारुदत्तकृतप्रथमसंस्करणे)।
3. वाक्यपदीयम्, 1.130
4. मैत्रायणी उपनिषद्, पृ.सं. 6-22
5. शब्दतत्त्वविवेचनसन्दर्भे मम पुस्तकं शब्दब्रह्ममीमांसेति द्रष्टव्यम्।

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥**[1]

कारिकामिमां वीक्ष्य सहसा महाभारतस्य श्लोकः स्मृतिमार्गे समायाति। यत्रोक्तमस्ति–

**अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।**
**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥**

महाभारतीयं श्लोकमिमं पाठं पाठं एतत्तु निश्चितं भवति यत् शब्दोऽयं आदिनिधनरहितोऽस्तीति। एतदप्यत्रोद्घाटितं भवति यत् लक्षणमिदं शब्दतत्त्वस्य शब्दब्रह्ममार्गे नयतीति भावः। वस्तुतः सर्वमिदं जगत् शब्दानुविद्धमेत्। यत् किञ्च जगत्यस्मिन् किलावलोक्यते तत् कृत्स्नं वस्तु तेन शब्दप्रकाशेन प्रकाश्यते। यावत्पर्यन्तं कथनेन न भवति तावत्पर्यन्तं स्थितमप्यत्र वस्तु नैव दृश्यत इति। यथोक्तं भर्तृहरिणा–

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥**[2]

वस्तुतः शब्दब्रह्म प्रकाशस्वरूपं भवत्येव। नास्त्यावश्यकता किलान्यबाह्यप्रकाशस्य। यतोहि ब्रह्मणः स्वयं प्रकाशरूपत्वविषये उपनिषद् खल्वपि निगदत्यत्र–

**न तत्र सूर्यो भाति न चन्द्रतारकं**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः।**
**तमेव भान्तमनुभाति सर्वं**
**तस्य भासा सर्वमिदं विभाति।**[3]

शब्दब्रह्म यथा आदिनिधनरहितं प्रथितं तथैव किल एतदप्यत्र सिद्धं यत् ब्रह्माद्वितीयमस्ति। अर्थभावेनैवास्य शब्दब्रह्मणः विवर्तनमस्ति। एतत् सर्वं भेदयुतं प्रतीयते न तु स्वरूपं विद्यतेऽस्य। वस्तुतः प्रक्रिया भेदात् वैविध्यं खलु। प्रकृतिप्रत्यययोः ज्ञानं केवलं प्रक्रिया निर्वाहार्थं विद्यते न तु वास्तविकं किल। प्रकृतिप्रत्यययोः कारणेनैव शब्दसृष्टिर्भवतीति। यथा मातापितरौ जन्मनः कारणत्वेन प्रथितौ तद्वच्चाप्यत्र प्रकृतिप्रत्यययोः स्वरूपमवगच्छेदिति। प्रकृतिस्तु पार्वती प्रोक्ता प्रत्ययस्तु महेश्वर इति। [4]व्याकरणदर्शन भूमिकानामके ग्रन्थे आचार्यरामाज्ञापाण्डेयस्त्वत्र–अत्र प्रकृतिपदेन माता, प्रत्ययपदेन च पिता गृह्यते। अतएव भाष्यकृता पतञ्जलिना प्रोक्तं न केवला प्रकृतिः प्रोक्तव्या न केवलः प्रत्ययः।[5] कालिदासोऽप्यत्र मातृपितृरूपत्वेन स्मरति खलु। यथोक्तं तत्र–

---

1. वा.प., 1.1।
2. तदेव, 1.123
3. मुण्डकोपनिषद्, 2.10
4. व्याकरणदर्शन भूमिका (सम्पूर्णानन्द संस्कृतविश्वविद्यालयप्रकाशनम्) पृ.सं. 5
5. महाभाष्यम्, 1.2.64

**वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।**
**जगत: पितरौ वन्दे पावतीपरमेश्वरौ।।**[1]

वर्णपदादय: सर्वे प्रक्रियानिर्वाहकारणेन विभज्यन्ते। यथोक्तं तत्र वाक्यपदीये भर्तृहरिणा– शास्त्रेषु प्रक्रिया भेदैरविधैवोपवर्ण्यते।[2] तत्रैव भर्तृहरि: समाधानमपि प्रस्तौति। निगदति यत्–

**असत्ये वर्त्मनि स्थित्वा तत: सत्यं समीहते।**[3]

कूपखानकन्यायेनासाधुवर्णोच्चारणदोषा: प्रक्षालिता: भवन्ति, येन किल धर्मस्य कारणं भवतीतिभाव:। नागेशभट्टोऽपि [4]प्रकारान्तरेण निगदत्यत्र – शास्त्रप्रक्रियानिर्वाहको वर्णस्फोट:। प्रकृतिप्रत्ययास्तत्तदर्थवाचका: इति।

भर्तृहरिणा महता कण्ठेनोक्तं यत् तच्छब्दब्रह्म एकमेव विद्यते। एकं भूत्वाऽपि वैविध्यरूपतामेति। वैविध्यस्य कारणं शक्तिरिति। यथा एकं ब्रह्म वेदान्तदर्शने मायया वैविध्यं प्रतिभाति तद्वच्चाप्यत्र कालशक्तिकारणेन वैविध्यमिति। तत्र वेदान्तदर्शने ब्रह्मणि प्राप्ते मायाऽविद्या वेति विलुप्यते, नैव तद्वत् शब्दब्रह्मण: कालशक्ति: विलुप्यत इति ध्रुवम्। प्राप्ते ब्रह्मण्यपि कालशक्त्या: किल भवत्यैवास्तित्वमिति भाव:। एकमपि तच्छब्दब्रह्म बहुधा विभज्यते। कथितमपि भर्तृहरिणा प्रतिबन्धाभ्यनुज्ञाभ्यां तेन विश्वं विभज्यते।[5] यथा जलं सलिलं वेति एकं भूत्वाऽपि आवर्त्तबुद्‌बुद्‌तरङ्गादिभेदेन वैविध्यरूपतामेति तथैव शब्दब्रह्मापि। यथोक्तं वाक्यपदीये–

**एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्।**
**अपृथक्त्वेऽपि शक्तिभ्य: पृथक्त्वेनेव वर्तते।।**[6]

इदमेव शब्दब्रह्म सर्वबीजरूपत्वेन भर्तृहरिणा व्याख्यातं तत्र वाक्यपदीये। नष्टे संसारेऽपि बीजरूपं शब्दब्रह्म तथैव तिष्ठतीति। यतोहि बीजे नष्टे सति सृष्टिरसंभवा। अत: एतत् बीजरूपं तत्र सर्गान्तेऽपि तिष्ठत्येवेति ध्रुवम्। शब्दब्रह्मण: त्रिविधा स्थितिरप्यत्र प्रतिपादिता किल। तदेव शब्दब्रह्म भोक्तृ–भोक्तव्यभोगरूपत्वेन विराजत इति। प्रसङ्गेऽस्मिन् सूर्यमायाटीकाकारस्त्वत्र – तस्यैकस्य ब्रह्मणो नटवत् स्वशक्त्या गृहीतभोक्त्राद्येकरूपपरित्यागेन पुनर्गृहीतभोक्तव्यादिरूपान्तरं प्रतिपद्यमानस्य शक्तिनिबन्धना इयमनेकरूपा मृषारूपभेदविभागव्यवस्थेति नाद्वैतहानिरिति निष्कृष्टोऽर्थ:।[7]

वस्तुत: शब्दब्रह्म नट इव निजरूपं परिवर्तयति। यथा नट: नाटके विविधं रूपं धारयति तथैव शब्दब्रह्मेदं प्रयोजनवैविध्यवशाद् बहुविधरूपत्वमेति।

---

1. रघुवंशम्, 1.1।
2. वा.प., 2.233।
3. तदेव, 2.238।
4. परमलघुमञ्जूषा, शक्तिनिरूपणम् (डॉ. कपिलदेव शास्त्री) पृ.सं. 10।
5. वा.प., 3.9.4।
6. तदेव, 1.2।
7. सूर्यमायाटीका (वाक्यपदीय ब्रह्मकाण्डस्य, पं. वेदानन्द झा कृता) पृ.सं. 28।

यथोक्तं तत्र वाक्यपदीये[1]–

**एकस्य सर्वबीजस्य यस्य चेयमनेकधा।**
**भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः॥**

मनसि प्रश्नोऽयं समुत्पद्यते यत् किं तत्र शब्दब्रह्मरूपत्वम्? किं श्रूयमाणो शब्द एव ब्रह्म? न तु। श्रूयमाणो शब्दस्तु वैखरीरूपः खलु। वस्तुतः पश्यन्ती एव शब्दब्रह्मरूपत्वेन राजत इति। आचार्य रामाज्ञापाण्डेयोऽपि प्रबलसमर्थकरूपेण पश्यन्तीमेव प्रणवपदत्वेनाङ्गीकरोतीति[2]। एतदप्यत्र कथनीयं यत् प्राथम्येन भर्तृहरिरेव पश्यन्तीमध्यमावैखरीरूपेण वाचः विभागं कृतवान्। भर्तृहरेः पूर्वं न केनापि वाचः पश्यन्त्यादिनामभिः चर्चा कृतेति ध्रुवम्। भर्तृहरिणा वाचः त्रिविधं रूपमेव वर्णितं तत्र। तद्यथा[3]–

**वैखर्या मध्यमायाश्चपश्यन्त्याश्चैतदद्भुतम्।**
**अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्॥**

परावाचः चर्चा कारिकायां तेन तत्र न कृता। इत्यनेन कारणेन व्याकरणसम्प्रदाये विवादस्य विषयो जातः। किं भर्तृहरिमते वाणी त्रिधा चतुर्धा वेति[4], विषयेऽस्मिन् मतैक्यं नास्ति।

अत्र नागेशभट्टस्य मतं वर्तते यत् परावाणी व्याकरणस्य विषयो भवितुं नार्हति, अतएव भर्तृहरिणा नोद्धृतेति। तेनोक्तं तत्र महाभाष्यस्य उद्योतटीकायां यत्–'[5]पश्यन्ती तु लोकव्यवहारातीता योगिनां तु तत्रापि प्रकृतिप्रत्ययविभागावगतिरस्ति। परायां तु नेति त्रय्याः इत्युक्तम्।'

केचन विद्वांसः कथयन्ति यत् भर्तृहरिणा स्वोपज्ञवृत्तौ[6] 'परां प्रकृतिं प्रतिपद्यते' इत्यनेन परा उद्धृतेति। प्रसङ्गेऽस्मिन् वाक्यपदीयस्य प्राचीनटीकाकारः वृषभदेवस्तु[7] परामित्यस्य स्थाने उत्कृष्टामिति प्रतिपादयति। इत्यनेन स्फुटं भवति यत् पश्यन्त्याः विशेषणत्वेन परामिति शब्दः प्रयुक्त इति। इयमेव वाक कृत्स्नं भुवनमालोकयति। संसारस्य तमः दूरीकृत्य वाणीविभागविषये आचार्यगौरीनाथशास्त्रिणः[8] मतं वर्तते यत् तन्त्रशास्त्रप्रभावादेव केनापि पुण्यराजसदृशेन विदुषा परा प्रोक्तेति। नागेशेन परावाक् उद्धृतेति–

**परावाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।**
**हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥**[9]

---

1. वा.प., 1.4
2. व्याकरणदर्शन भूमिका (रामाज्ञापाण्डेयरचिता) पृ. 7, प्रणवपदेनापि पश्यन्ती ग्राह्या।
3. वा.प., 1.142
4. प्रसङ्गेऽस्मिन् मदीयः लेखः वाणी त्रिधा चतुर्धा वा इत्यत्र भर्तृहरिः (विश्वसंस्कृतम् जूनमासस्य 1996) द्रष्टव्य इति।
5. महाभाष्यस्य उद्योते भा. 1. पृ.सं. 33
6. स्वोपज्ञवृत्तिः, 1.14, पृ.सं. 37
7. वृषभदेव पद्धतिः, वा.प., 1.14 पृ.सं. 48, पराम् उत्कृष्टाम्
8. The Philosophy of word and meaning, p. 70.
9. वैयाकरणपरमलघुमञ्जूषा, स्फोटनिरूपणम् पृ.सं. 92 (डॉ. कपिलदेवशास्त्री संस्करणे)।

उपर्युक्तानि मतानि सम्यक् परीक्ष्याभिनवाः सन्देहाः स्वतः एवाऽविर्भवन्ति यत् किं भर्तृहरिमते, चतुर्विधं रूपं आसीत् अथवा '[1]चत्वारिवाक् परिमितापदानि' इति मतं समन्वयार्थमेव नागेशेन चतुर्विधं मतं समुद्घाटितम्। किम्वा भर्तृहरिणा केवलं व्याकरणदृशा तत्र त्रय्या वाचः परं पदमित्युद्धतम्। तत्त्वतस्तु वृत्तिमाश्रित्यैव विवादः किल। एतत्तु निश्चप्रचं यत् कारिकायां भर्तृहरिणा त्रय्या वाचः परं पदमेवोद्धतमिति।[2] इयमेव पश्यन्ती वागस्ति यां विना जिह्वाऽपि स्पन्दनकार्यसम्पादनेऽक्षमा किल। इयं वाक् केवलं निर्विकल्पकसमाधिगम्या खलु मुमुक्षुभिरेव समाधिदशायां प्रापणीया भवतीति भावः। इयमेव शब्दतत्त्वस्वरूपा ब्रह्मरूपा वेति विद्यते। यद्वयं वदामः अथ च यत् श्रूयते श्रोतृभिर्नैव तादृशः शब्दः ब्रह्मेति। वैखरी वागेव श्रुतिगोचरा खलु। पश्यन्त्यावस्थायां ब्रह्मरूपत्वं भवतीति। अतीन्द्रिया वाणी पश्यन्ती कथ्यते। इयमेव चैतन्यस्वरूपा।[3] इयमेव प्रकाशरूपा।[4] इयं वाग् समस्तलोकान् करोत्यालोकमिति।[5] पश्यन्तीं विना प्रकाशोऽपि न भवितुमर्हति प्रकाशितः। सैषा वाणी भर्तृहरेः शब्दब्रह्मरूपेति। इयमेव वाक् कृत्स्नं भुवनमालोकयति। संसारस्य तमः दूरीकृत्य सर्वाणि वस्तूनि प्रकाशयुतानि करोतीति। काव्यादर्शे दण्डिना तत्र इत्थमेव वर्णितमस्ति। यथोक्तं तेन–

**इदमन्धतमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।**[6]

शब्दब्रह्मरूपत्वं [7]बाइबिलग्रन्थेऽपि दृश्यते। सर्गादौ शब्दतत्त्वमेवासीत् तच्च ब्रह्मरूपत्वेन चाऽसीदिति।

वस्तुतः प्रकृतिप्रत्ययविभागप्रपञ्चं प्रकाशाप्रकाशावपि समुलमङ्घ्य निर्विकल्पकसमाधिगम्यां वाग्रूपां (पश्यन्तीं) प्रकाशस्वरूपां यः कोऽपि साधकः सम्यग् समुपासते सः निश्चप्रचं मोक्षत्वं लप्स्यत इति। यथा प्रस्तौत्यत्र भर्तृहरिः–

**वैकृतं समति क्रान्तामूर्तिव्यापारदर्शनम्।**
**व्यतीत्यालोकतमसी प्रकाशं यमुपासते।।**[8]

भर्तृहरेः समुद्घोषोऽयं विद्यते यत् व्याकरणेन मोक्षाधिगमः सर्वथा सम्भाव्यत इति। यदेकं शब्दब्रह्म प्रकृतिप्रत्ययादिभिर्बहुधा बहुरूपत्वेन वेति गण्यते तच्छब्दब्रह्म व्याकरणज्ञानमाध्यमेनानुभूयत इति भावः। यथोक्तं तत्र–

---

1. ऋग्वेदः, 1.164.45।
2. अस्मिन् सन्दर्भे मम पुस्तकं शब्द ब्रह्ममीमांसेति द्रष्टव्यमिति।
3. वाग्रूपत्वमेव चितिक्रियारूपम् (पुण्यराजटीका, पृ.सं. 48।
4. स्वोपज्ञवृत्तिः (वा.प. 1.142) स्वरूपज्योतिरेवान्तः सूक्ष्मावागनपायिनी।
5. वा.प., 1.125, न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी।
6. काव्यादर्शे, 1.4.
7. द्रष्टव्यम्, Bible, New Testament, St. John chapter, 1, In the beginning was the word and the word was with God and the word was God.
8. वा.प., 1.19.

**यदेकं प्रक्रियाभेदैर्बहुधा प्रविभज्यते।**
**तद् व्याकरणमागम्य परं ब्रह्माधिगम्यते।।**[1]

व्याकरणेन वाक् शुद्धिर्भवति। येनोच्चारणसमये सौकर्यं भवति। 'एको शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्णे लोके च कामधुक् भवति' इत्यपि श्रूयत एव। यः कोऽपि शब्दसाधकः विशुद्धमनसा चिन्तयति स एव मोक्षस्य भवत्यधिकारी इति भावः। कथितं तत्र मुण्डकोपनिषदि–

**न चक्षुषा गृह्यते न वाचा नान्यैर्देवैस्तपसा कर्मणा वा।**
**ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते ध्यायमानः।।**[2]

व्याकरणेन वाचः मलानां विशुद्धिक्रिया अनुष्ठीयते। येन किल वाचः चिकित्सा भवति। चिकित्सयाऽनया न काऽपि विचिकित्साऽवशिष्यत इति भावः। अपगतमलेन शब्दोच्चारणेनाभ्युदयोऽप्यत्र प्रथित एव। यथोक्तं तत्र–

**तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।**
**पवित्रं सर्वविधानामधिविधं प्रकाशते।।**[3]

यथाऽऽयुर्वेदः शरीरस्थान् दोषानपहरति तद्वच्चाप्यत्र व्याकरणमपि वाग्दोषान् सम्यगपहृत्य विशोधयतीति। तदेव भवति कारणमभ्युदस्येति। यथा स्वोपज्ञवृत्तौ व्याख्यतम्–[4]आयुर्वेद इव शरीराणां दोषाणाम्। व्याकरणज्ञो हि प्रत्यवायहेतु भूतानप्रभ्रंशान्न प्रयुङ्क्ते। भर्तृहरिणा स्फुटं प्रोक्तं यत् व्याकरणमिदं खल्वपवर्गस्य द्वारम्। ततोऽपि मोक्षस्य राजमार्गत्वेन व्याकरणमिदं व्याकृतमस्ति। मोक्षप्राप्त्यर्थं इदमेवाद्यं पर्व विद्यते। इयं सरला अकुटिलावेति राजपद्धतिरस्ति। व्याकरणविधयैव मोक्षाधिगः सारल्येन सम्भव इति भावः। उक्तञ्च भर्तृहरिणा–

**इदमाद्यं पदस्थानं सिद्धिसोपान पर्वणाम्।**
**इयं सा मोक्षमाणानामजिह्माराजपद्धतिः।।**[5]

वेदोऽप्यत्र शब्दब्रह्मणः प्राप्त्युपायत्वेन भर्तृहरिणा प्रोक्त इति। वेदोऽयं तस्य शब्दब्रह्मणः साक्षात् अनुकारः एव विद्यते। यथोक्तं भर्तृहरिणा–

**प्राप्त्युपायोऽनुकाश्च तस्य वेदो महर्षिभिः।**
**एकोऽप्यनेकवर्त्मेव समाम्नातः पृथक् पृथक्।।**[6]

---

1. तदेव, 1.22.
2. मुण्डकोपनिषद्, 1.3.8.
3. वा.प, 1.14.
4. स्वोपज्ञवृत्तिः (वा.प., 1.14) पृ.सं. 38 (अम्बाकर्गीव्याख्याकार कृत संस्करणम्)।
5. वा.प., 1.16.
6. तदेव, 1.5.

वस्तुतः पुरुषार्थचतुष्टये मोक्षः परमपुरुषार्थत्वेन प्रोक्त इति। विविधेषु दर्शनेषु मोक्षमार्गाः प्रदर्शिताः विद्यन्ते। तेषु व्याकरणस्य मार्गः सरलतमतो विद्यते। वाक्शुद्धिप्रक्रियाद्वारा सारल्येन प्रापणीयोऽयं मोक्ष इति।

अहंभावस्य त्याग एव मोक्ष इति। भावोऽयं स्वोपज्ञवृत्तौ भर्तृहरिणा प्रदर्शित इति। यथोक्तं तत्र–[1]ममाहमित्यहङ्कारग्रन्थिसमतिक्रममात्रं ब्रह्मणः प्राप्तिः।

शब्दसाधकः भ्रान्तिहीनो यदा भवति अथ च साधुशब्दज्ञानमधिगच्छति तदा शुद्धशब्दस्य प्रयोगं कुर्वाणः केवलां [2]वाणीं पश्यन्तीरूपां वेति पश्यतीति भावः भर्तृहरेः अयमप्यत्रोद्घोषो विद्यते यत् इदं व्याकरणं किल ब्रह्मणः निकटतममस्ति। वेदाङ्गेषु खलु मुख्यत्वेन विराजमानं [3]तपसामप्युत्तमं तपः वर्तते। यानि किलाखिलानि लोके तपांसि वर्तन्ते, सर्वेषु इदं तपः पवित्रतमं विद्यत इति। अतएव भर्तृहरिणा मोक्षाय प्रथमं पर्व प्रतिपादितमिति। पौनः पुन्येन भर्तृहरिणा साधुशब्दानामुच्चारणमभ्युदयाय समुद्घोषितं किल। साधुशब्दानां समूह एव पुण्यतमः प्रकाशः खलु। वाचः परमो रस[4] इत्यपि तत्र व्यख्यातम्। साधुशब्दपरमरसे स्नात एव शब्दसाधकः परमतत्त्वं शब्दब्रह्मरूपत्वमधिगच्छतीति। यतोहि भर्तृहरिः शब्दब्रह्मणा साकं सायुज्यमेव[5] मुक्तिरूपत्वेन समुद्घोषयति। येन खलु वैदिकमन्त्रस्य 'महो देवो मर्त्यां आ विवेश[6] इति भावः सार्थक्यमाप्नोतीति। इत्यनेननावगम्यते यत् भर्तृहरिः सर्वत्र सर्वथा वैदिकमन्त्रमेवानुगच्छति।

शब्दब्रह्मप्रतिपादकेन भर्तृहरिणास्फुटरूपेण व्याख्यातं यत् [7]परमात्मनः सिद्धिः शुद्धशब्दप्रयोग-योगादेव भवतीति। यः शुद्धशब्दप्रयोक्ता शब्दतत्त्वस्य रहस्यं सम्यग् वेत्ति, सः एव परमात्मरूपं शब्दब्रह्माधिगच्छतीति। भर्तृहरिणा शब्दब्रह्मणः प्राप्तिरमृतत्त्वेन व्याकृतेति। वैदिकमन्त्रोऽपि समुद्घोषयति यत् सोमरसपानेनामृतत्त्वमधिगम्यत इति। तद्यथा–

**'अपाम सोमममृता [8]अभूम अगन्म ज्योतिर् अविदाम देवान्।'**

यः कोऽपि साधकः पश्यन्तीं वाणीं सम्यग् समुपासते सः निश्चप्रचं मृत्युं तरतीतिध्रुवम्। स्वोपज्ञटीकायां स्पष्टतः व्याकृतं यत्–'ते मृत्युमतिवर्तन्ते ये वै वाचमुपासते।[9] वस्तुतः वाचः उपासकः

---

1. हरिवृत्तिः (वा.प., 1.5) पृ.सं. 16
2. वा.प., 1.17, अत्रातीतविप्रयासः केवलामनुश्यति। छन्दस्थश्छन्दसां योनिमात्माच्छन्दोमयीं तनुम्।।
3. तदेव, 1.11, आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः। प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधाः।।
4. तदेव, 1.12, प्राप्तरूपविभागाया यो वाचो परमोरसः। यत्पुण्यतमं ज्योतिस्तस्य मार्गोऽयमाञ्जसः।।
5. तदेव, 1.130.
6. ऋग्वेदः, 4.58.3.
7. वा.प., 1.131, तस्माद्यः शब्दसंस्कारः सा सिद्धिपरमात्मनः। तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते।।
8. ऋग्वेदः, 8.46.3।
9. स्वोपज्ञवृत्तिः (वा.प., 1.126) पृ. 189 (पं. रघुनाथशर्मणः टीकाग्रन्थे)।

वाचस्पतिर्भवति। अतएव त्वत्र भर्तृहरिणा कारिकायामप्युदाहृतम्—व्यतीत्यालोकतमसी प्रकाशं [1]यमुपासते इति।

मोक्षस्यस्वरूपं प्रतिपादयता भर्तृहरिणा स्फुटं प्रोक्तं यत् वाचः [2]संस्कारं कृत्वा सम्यग् चापि ज्ञात्वा साधकः सर्वविधैहिकबन्धनानि परित्यज्य. बन्धनमुक्तो भवति। ब्रह्माऽलोकेनाज्ञानान्धकारं संहृत्य ज्योतिर्मयो [3]भवति। ब्रह्मविद् ब्रह्मैव भवति यथा तथैव ब्रह्माऽलोकं प्राप्त्वा ब्रह्मण्येव समाहितो भवति इति भावः। उपनिषदः सारोऽयं विद्यते यत् प्राप्ते ब्रह्मणि सर्वसंशयाःभिद्यन्तेऽथ च हृदयग्रन्थिरपि स्वत एव छिद्यत इति। यथोक्तं तत्र—

**भिद्यते हृदयग्रन्थिच्छिद्यन्ते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे।।**[4]

ऋग्वेदीयमन्त्रोऽप्यत्र बन्धनात् पृथक्करणमेव मोक्षत्वेन प्रतिपादयति। यथोक्तं तत्र—[5]उर्वारुक-मिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। पद्धतिकारस्य[6] वृषभदेवस्यापि समुद्घोषोऽयं विद्यते यत् यः व्याकरणं न जानाति स एतत् सर्वं न जानातीति। इत्यनेन त्वत्र स्फुटं भवति यत् व्याकरणं मोक्षसाधनमिति। वस्तुतः ब्रह्मविद् ब्रह्मैव[7] भवति इति सिद्धम्।

भर्तृहरेरुद्घोषोऽयं विद्यते यत् शब्दादेव सृष्टिरथ च शब्दे एव लयोऽपि विद्यते। सर्वप्रथममेव प्रथमायां कारिकायां व्याख्यातं यत् शब्दतत्त्वं किलार्थभावेन विवर्त इति। महाभारते खल्वपि दृश्यते यत् शब्दादेव सृष्टिरिति। प्रोक्तं तत्र—

**अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।**
**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः।।**[8]

मुण्डकोपनिषद्यपि अक्षरब्रह्मणः सृष्टिः प्रोक्तेति। यथोक्तं तत्र तथाक्षरात्सम्भवतीह विश्वमिति।[9] व्याख्यायामस्यां शाङ्करभाष्यकारस्त्वत्र[10] यथैते दृष्टान्तास्तथा विलक्षणं सलक्षणं च निमित्तान्तरान-पेक्षाद्यथोक्तलक्षणादक्षरात्सम्भवति समुत्पद्यते इह संसारमण्डले विश्वे समस्तं जगत्।

---

1. वा.प., 1.19
2. स्वोपज्ञवृत्तिः (वा.प.) पृ.सं. 198. वाचः संस्कारमाधाय वाचं ज्ञाने निवेश्य च। विभज्य बन्धनान्यस्याः कृत्वा तांछिन्नबन्धनाम्
3. तदेव, ज्योतिरान्तरमासाद्य छिन्नग्रन्थिपरिग्रहः। परेण ज्योतिषैकत्वं छित्त्वा ग्रन्थीन् प्रपद्यते।।
4. मुण्डकोपनिषद्, 2.2.8.
5. ऋग्वेदः, 7.59.12.
6. वृषभदेवस्य पद्धतिः (वा.प., 1.12) पृ. 43 (अय्यरसंस्करणे)।
7. मुण्डकोपनिषद्, 3.2.9.
8. महाभारतम्, शान्तिपर्व, अध्यायः 23, श्लो.सं. 24.
9. मु. उपनिषद्, 1.7.
10. शाङ्करभाष्यम् (मु. उपनिषद्, 1.7) पृ.सं. 23.

[1]तैत्तिरीयब्राह्मणग्रन्थेऽपि शब्दात् सृष्टिप्रक्रिया सर्वथा परिलक्ष्यते। यथोक्तं तत्र—स भूरिति व्याहरत्। स भुवम् असृजत्। स भुवरिति व्याहरत् सोऽन्तरिक्षम् असृजत्। भर्तृहरिणा स्वोपज्ञवृत्तावप्यत्र विश्वोद्भवः वाग् द्वारा समुद्घोषितः। तद्यथा—वागेवविश्वाभुवनानि जज्ञे इति।[2] ऋग्वेदे तु वाणी जगदुत्पादिका समुद्घोषिता दृश्यते। यथोक्तं तत्र—

**अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा।**
**परो दिवा पर एना पृथिव्यै तावती महिना संबभूव॥**[3]

[4]व्याख्यायामस्यां सायणस्त्वत्र—विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा कारणरूपेणोत्पादयन्ती अहमेव परेणाधिष्ठिता। स्वमेव प्रवामि प्रवर्तते।

यथा तैत्तिरीयोपनिषदि वागुच्चारणेन सृष्टिः प्रोक्ता तथैव किल [5]बाइबिल ग्रन्थेऽप्यत्र परमात्मनाऽऽदिष्टं, प्रकाशः भवतु अथ च प्रकाशो जात इति।

वस्तुतः सर्गादौ शब्द एवाऽसीत्। स च सृष्टिकारकोऽपि। सर्गान्ते स एव शब्दः प्रतिलीयते। पश्यन्तीवाग्रूपमेव सृष्टिमूलकमपि। सर्वबीजप्रकृतिरिति पश्यन्त्येव सर्गान्ते तत् बीजं तस्यामेव वाचि प्रविलीयत इति।

भर्तृहरेः कारिकायामेवोद्घोषोऽयं विद्यते यत् संसारोऽयं शब्दब्रह्मणः परिणाम इति। तस्मादेव शब्दतत्त्वात् संसारस्याखिलचराचरं वस्तूत्पद्यते। तत्रैव इत्थमपि विचारः प्रस्तुतः विद्यते यत् प्राथम्येन वेदेभ्य एव सृष्टिर्जातेति। विश्वमेतत् तस्य शब्दतत्त्वस्य एव परिणामत्वेन सिद्धमिति। यथोक्तं तत्र—

**शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।**
**छन्दोभ्यः एव प्रथममेतद् विश्वं व्यवर्तत॥**[6]

इत्यनेनाप्यत्रावगम्यते यत् शब्दतत्त्वमेव जगतः सृष्टिकारणमिति। तदेव च सर्गप्रकृतिरिति। ब्रह्मरूपा पश्यन्ती वाक् सृष्टिमूला सर्वेषां शिल्पानां कलानामपि सर्वासां उपबन्धनीकारणभूता इत्यस्ति। वाग्रूपतावशादेव वस्तुमात्रं स्वस्वरूपेषु विभक्तं भवति। यथोक्तं भर्तृहरिणा—

**सा सर्वविद्या शिल्पानां कलानां चोपबन्धनी।**
**तद्वशादभिनिष्पन्नं सर्वं वस्तु विभज्यते॥**[7]

---

1. तैत्तिरीय ब्राह्मणग्रन्थः, 2.2.4.2–3।
2. स्वोपज्ञवृत्तिः (वा.प., 1.120)।
3. ऋग्वेदः, 10.125.8.
4. सायणभाष्यम्, (तदेव पृ.सं, 23)।
5. Bible, Old Testament, Genesis, chapter, 13, And God said let there be light and there was light.
6. वा.प., 1.120.
7. तदेव, 1.125.

शब्दतत्त्वमेव सर्वबीजमेव।[1] तत् बीजं सूक्ष्मत्वेन शब्दतत्त्वे तिष्ठति। यदा सिसृक्षात्मिका शक्ति:सृष्ट्यर्थं प्रयतते तदा सर्गः संभवतीति। पश्यन्ती वागेव सृष्टिमूला। इयं जगत्कारणभूता। शाब्दिकानां प्रकृतिप्रत्यययोः कल्पना चित्रैव खलु। प्रकृतिः माताऽस्ति प्रत्ययश्च पिता। सृष्ट्यर्थं मातापितरौ भवतः एव। तथैव चात्र प्रकृतिप्रत्ययौ खलु। सांख्यकारिकायामपि प्रकृतिपुरुष संयोगात् सृष्टिः प्रोक्ता। यथोक्तं तत्र–

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।**
**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः॥**[2]

सर्वे पदार्थाः घटपटादयश्च शब्दादेव समुद्भवन्ति। सर्गान्ते समस्तानि वस्तूनि सर्वे च पदार्थाः तस्मिन्नेव शब्दतत्त्वे विलीयन्त इति भावः। यथोक्तं तत्र–

**ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम्।**
**विवृतं शब्दमात्राभ्यस्तास्वेव प्रतिलीयते॥**[3]

सर्गादौ कृत्स्नं व्यक्ताव्यक्तं जगत् पश्यन्त्यामेव वाचि कुण्डितं भवति। पुनश्च, सिसृक्षात्मिकाकालशक्त्या वशादेव जगदुत्पादिका कारणभूता बिन्दुरूपिणी पश्यन्ती वागेव सर्गोन्मुखा भवतीति भावः। अन्ते च अस्यामेव पश्यन्त्यां शब्दब्रह्मरूपायां कृत्स्नं जगत् प्रविलीयत इति।

शब्दब्रह्मणः प्रमुखा शक्तिः कालशक्तिर्विद्यते। अनयैव कालशक्त्या शब्दब्रह्म सृष्टिरचना-नाटकस्य सम्पादने भवति सक्षमम्। प्राप्ते ब्रह्मण्यपि शक्तिरियं नैव भवति शब्दब्रह्मणः पृथगिति भावः। इयमेव कालशक्तिः चर्कर्ति बर्भर्ति जर्हर्ति च जगत्। इदमेव कालतत्त्वं अहोरात्रं जनयति। संवत्सरं चापि द्वादशभागेषु विभनक्तीति। इयमेव विश्वजनिका शक्तिरिति। अस्ति जायते इत्यादयः षड्भावविकाराश्च अस्याः प्रभावदेव भवन्तीति। यथोक्तं तत्र–

**अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः।**
**जन्मादयो विकाराः षड् भावभेदस्य योनयः॥**[4]

विविधशक्तयः अस्यामेव शक्त्यां समाविष्टाः सन्ति। एकमेव शब्दब्रह्म बहुरूपत्वेनानुभूयते [5]वैश्वरूपं यच्च दृश्यते तस्य कारणं कालशक्तिरेव। भर्तृहरेः कालशक्तिः स्वातन्त्र्येन प्रथिता खलु। यथोक्तं स्वोपज्ञवृत्तौ–[6]'कालाख्येन हि स्वातन्त्र्येण सर्वाः परतन्त्राः जन्मवत्यः शक्तयः समाविष्टाः कालशक्तिवृत्तिमनुपतन्ति।

---

1. तदेव, 1.4, एकस्य सर्वबीजस्य यस्य चेयमनेकधा।
2. सांख्यकारिका, 21.
3. स्वोपज्ञवृत्तौ (वा.प., 1.1) पृ.सं. 10.
4. हरिवृत्तिः (वा.प., 1.1) पृ.सं. 10, विवृतं शब्दमात्राभ्यस्तास्वेव प्रतिलीयते।
5. वृषभदेवस्य पद्धतिः (वा.प., 1.3) पृ.सं. 19, इदं वैश्वरूपं पदार्थानां येन संक्रममिव प्रतिभासते।
6. हरिवृत्तिः (वा.प., 1.3.) पृ.सं. 13 (पं. रघुनाथशर्मकृते संस्करणे)।

कालशक्त्याः किलावान्तरशक्तिद्वयमपि दृश्यते। प्रतिबन्धाभ्यनुज्ञा चेति। एका शक्तिः करोति प्रतिबन्धं अपरा च करोत्यभ्यनुज्ञामिति। वृषभदेवः ब्रह्मकाण्डस्य व्याख्यायां कथयत्यत्र– [1]यथैकस्मिन् वृक्षे किसलयस्याभ्यनुज्ञापल्लवस्य प्रतिबन्धः। ततः किसलयस्य प्रतिबन्धः पल्लवस्याभ्यनुज्ञा।

उपर्युक्तेन कथनेनानेनावगम्यते यत् शक्तिद्वयस्य कारणेनैव प्राकृतिकपदार्थेषु पौवापर्यव्यवस्था सम्यक् प्रचलतीति भावः। अस्याः कालशक्त्याः व्यवस्थयैव युगपत् समुत्पत्तिर्वस्तुषु न दृश्यते। पूर्वं पुष्पं भवति ततः फलमिति। नैव युगपदुत्पत्तिरित्यत्र खलु। यथोक्तं भर्तृहरिणा[2]–

**यदि न प्रतिबध्नीयात् प्रतिबन्धञ्च नोत्सृजेत्।**
**अवस्था व्याकीर्येरन् पौर्वापर्यं विना कृता॥**

कालद्वारा सञ्चालनत्वादेव प्रतिबन्धाभ्यनुज्ञयोः नैव भवति विरोध इति। भर्तृहरेः महती घोषणा विद्यते यत् कृत्स्नं जगत् कालशक्त्यधीनमेव। यथा सूत्रे प्रतिबद्धः पक्षी सूत्रस्यानुकूलेनोड्डयने सक्षमः भवति तथैव कृत्स्नं जगत् कालशक्तिसूत्रे प्रतिबद्धं विद्यत इति भाव। यथोक्तं तत्र भर्तृहरिणा[3]–

**प्रतिबद्धाश्च यास्तेन चित्रा विश्वस्य वृत्तयः।**
**ताः स एवानुजानाति यथा तन्तुशकुन्तिकः॥**

यथा नदीप्रवाहः तत्रस्थानि वस्तूनि यथेच्छं नयति तथैव कालशक्तिरपि कृत्स्नं जगत् यथेच्छं भ्रामयतीति भावः। यथोक्तं तत्र वाक्यपदीये[4]–

**तृणपर्णलतादीनि यथा स्त्रोतोऽनुकर्षति।**
**प्रवर्तयति कालोऽपि मात्रा मात्रावतां तथा॥**

कालशक्तिरियं सूत्रधारत्वेनापि प्रतिपादिता भर्तृहरिणाऽत्र। अस्याः कारणेनैव वैविध्यं रूपं वस्तुनः दृष्टिवर्त्मनि समायातीति। यथा प्रतिपादयत्यत्र भर्तृहरिः–

**तमस्य लोकयन्त्रस्य सूत्रधारं प्रचक्षते।**
**प्रतिबन्धाभ्यनुज्ञाभ्यां तेन विश्वं विभज्यते॥**[5]

भर्तृहरिणा जटाख्या शक्तिरेका परिकीर्तिता खलु। शक्तिरियं समस्तं भावं कुण्ठितं कुरुते। अतएव जराख्येयं लोके ज्ञायते। यथोक्तं तत्र[6]–

1. पद्धतिः (वा.प., 1.3) पृ.सं. 19.
2. वा.प., 3.9.5.
3. वा.प., 3.9.15.
4. तदेव, 3.9.41.
5. तदेव, 3.9.4.
6. तदेव, 3.9.24.

**जराख्या कालशक्तिर्या शक्त्यन्तरविरोधिनी।**
**सा शक्तिं प्रतिबध्नाति जायन्ते च विरोधिनः।।**

व्याख्यायामस्यां हेलाराजस्त्वत्र[1]--जीर्यते भावोऽनयेति जरा नाम कालस्य शक्तिः।

उपर्युक्तेन मतेनानेनावगम्यते यत् कालशक्तिरियं[2] शब्दब्रह्मणः प्रमुखा शक्तित्वेनात्र विराजते। इयमेव यथेच्छं लोकं परिभ्रामयति। अस्या एव कारणात् विश्वं रूपं चित्रं प्रतिभाति। अभेदयुतं वस्त्वपि भेदयुतमिव प्रतिभासते इति। विश्वस्य साररूपा[3] कालशक्तिरिति। शब्दब्रह्मणः कालशक्तिरियं स्वेच्छया सर्गं जनयति। सर्गान्ते शब्दब्रह्मण्येव कृत्स्नं जगत् लीयत। शक्तिरियं न च कदापि शब्दब्रह्मणः पृथक् भवति। प्राप्ते ब्रह्मणि इयमपि तत्रैव विलुप्यते इति।



---

1. हेलाराजटीका (वा.प., 3.9.24) पृ.सं. 545 (पं. रघुनाथशर्मकृते संस्करणे)।
2. प्रसङ्गेऽस्मिन् मम लेखः 'भर्तृहरिमते कालशक्तिः', विश्वसंस्कृतम्, आषाढपौषमासस्य जूनदिसम्बरमासः 2000 द्रष्टव्य इति
3. भर्तृहरिः (हिन्दी अनुवादः) (अय्यरकृते) पृ.सं. 120

# विवाहनिर्धारणे ग्रहमेलापकस्यानुशीलनम्

डॉ॰ रामबहादुरशुक्लः

आधुनिके उत्तर-आधुनिकतायुगेऽपि मानवः स्वकुल-गोत्ररीतिपरम्परा अथ च संस्कारान् सम्पादयत्येव। संस्काराः[1] तु षोडश भवन्ति[2], तेषां सम्पादनं गृहस्थाश्रमे एव संभवति। चतुर्षु आश्रमेषु यथा–ब्रह्मचर्यगृहस्थवानप्रस्थन्यासेषु गृहस्थाश्रम एव स श्रेष्ठाश्रमः मन्यते ऋषिभिः। यथा–मनुस्मृति-महाभारतयोः विवरणेन, स्पष्टोस्ति[3]। महर्षिणा दक्षेणापि निगदितं यत्–

**पत्नीमूलं गृहं पुंसां यदिछन्दानुवर्तिनी।**
**गृहाश्रमात्परं नास्ति यदि भार्या वशानुगा।।**
**तया धर्मार्थकामानां त्रिवर्गफलमश्नुते।[4]**

त्रिवर्गफलप्रदायिनी वशानुगा च भार्या केन विधिना मानवः प्राप्तुं शक्नोति, सर्वमिदं वरकन्ययोः ग्रहमेलापकस्यानुशीलनोपरान्ते एव दैवज्ञाःविचारयन्ति। अतएव विवाहसंस्कारस्य सम्पादनात् पूर्वं वरकन्ययोः अवश्यमेव ग्रहमेलापकस्यानुशीलनं करणीयम्।

---

1.
   A. संस्कारो नाम स भवति यस्मिञ् जाते पदार्थो भवति योग्यः कस्यचिदर्थस्य। जैमिनिसूत्रम्-3.1.3, शबरटीका
   B. योग्यतां चादधानाः क्रियाः संस्काराः इत्युच्यन्ते। तन्त्रवार्तिकम्-पृ.10 78
   C. संस्कारो हि नाम गुणाधानेन वा स्याद् दोषापनयनेन वा। वेदान्तसूत्रम् 1.1.1.4 पर शांकरभाष्यम्
   D. वैदिकैः कर्मभिः पुण्यैर्निषेकद्विजन्मनाम्।
   कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च।। मनुस्मृति 2.26

2. गर्भाधानपुंसवनसीमन्ता जातकर्म च।
   नामक्रियानिष्क्रमणेऽन्नाशनं वपनक्रिया।
   कर्णवेधो व्रतादेशो वेदारंभक्रियाविधिः।
   केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः।। – व्यासस्मृतिः 1.13-15
   विशिष्ट विवरण हेतुद्रष्टव्य, मनु. 2.16, याज्ञ. स्मृ. 1.10, मार्कण्डेय स्मृ. पृ. 25

3. यथा वायु समाश्रित्य वर्तन्ते सर्वजन्तवः।
   तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः।। मनु. 3.77,
   यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम्।
   तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्।। मनु. 6.90

4. दक्षस्मृतिः 4.1, 2

अद्यत्वे तु विवाहे[1] संस्कृतेरक्षा गौणतां प्राप्ता, केवलं च भयादेव, विशेषेण हिन्दूधर्मानुयायिनां मध्ये विवाहात् पूर्वं ग्रहमेलापकं क्रियते, यतो हि तस्मिन् समये-गृहस्थानां मनसि वरवध्वोः भविष्यं प्रति चिन्ता भवति। कन्या वरयते रूपं, माता वित्तं, पिता श्रुतम्, इत्यवधारणा तु प्राचीना पारम्परिकी,[2] च एवं च भारतवर्षे अधिकांशतः कन्यायाः पिता भ्राता अभिभावको वा स्वकन्यायाः पाणिग्रहणार्थं उत्तमोत्तमं वरमन्वेषयति। विवाहात् पूर्वमेव भवति वरकन्ययोः ग्रहमेलापकस्यानुशीलनम्, जन्मकुण्डलीमेलापकेन, तयोः निष्टकण्टकदाम्पत्यबन्धनस्य–पल्लवनार्थं वंशवृद्ध्यर्थं च। दैवज्ञैः जन्मनक्षत्रेण, जन्माङ्गेन, नाडीशोधनेन वा, या स्वकीया वैवाहिकसम्मतिः प्रदीयते, सा एव ग्रहमेलापकमिति संज्ञया लोके व्यवह्रियते। शास्त्रोक्तिरपि अस्ति यत्-वरकन्ययोः एकनाडी कथमपि न भवेत् एवं च द्वात्रिंशद् गुणेषु षोडशसंख्यातः न्यूना गुणाः कथमपि न स्युः।

यदि चेत् वरवध्वोः गुणानां संख्या षोडशसंख्यातः न्यूना, तदा तादृशयोः वरवध्वोः परस्परं विवाहः सर्वथा त्याज्यः। प्राचीनकाले भारतवर्षे विवाहानां प्रकाराः अष्टौ आसन्।[3] प्राजापत्यब्राह्म-दैवार्षगान्धर्वासुरराक्षपैशाच भेदात्। अष्टविधविवाहेषु प्रथमचतुर्विधविवाहार्थं ग्रहमेलापकमावश्यकमस्ति शास्त्रदृष्ट्या। तच्च गृहस्थैः वाग्दानात् पूर्वमेव विधातव्यम्। विवाहमेलापकस्य विचारणात् पूर्वमायुषः ज्ञानं करणीयम्।[4] अनन्तरमन्यानि लक्षणानि द्रष्टव्यानि, यतो हि आयुषं विना न भवति कस्यचिदपि प्रयोजनस्य सिद्धिः लक्षणानाम्।

भारतीयसंस्कृतेः परम्परानुसारं वरकन्ययोः गुणदोषादिकं यथारीतिमवगम्य पश्चात् उभयपक्षीयः जनो, द्वयोः जन्मकुण्डल्यावादाय शुभवासरे मुहूर्ते च कमपि दैवज्ञमासाद्य तयोः कुण्डलीमाध्यमेन स्थिरसन्ततिसुखसौभाग्यलाभनिमित्तानि ज्ञातुं यतते। तदेव ग्रहमेलापकनाम्ना उच्यते भारतीयपरम्परायाम्।[5] ज्योतिश्शास्त्रानुसारं तु ग्रहमेलापकं कूटादिभोगवशाद् विचार्यते। साम्प्रतं भारतेदशस्य सर्वेषु प्रान्तेषु अष्टकूटमाध्यमेन ग्रहमेलापकस्य गणना क्रियते। अष्टकूटाः वर्णवश्यतारायोनिग्रहमैत्रीगणभकूटनाड़ी चेत्याख्याः अष्टकूटाः भवन्ति, एवं यथाक्रममुत्तरोत्तरं प्रत्येककूटे एकैकस्य गुणस्य वृद्धिः भवति। यथा- **दैवज्ञमनोहरनाम्नि** ग्रन्थे वर्णनं प्राप्यते यत् वर्णस्य एकः, वश्यस्य द्वौ, तारायाः त्रयः योनेः

1. सहोभौ चरतां धर्ममिति वाच्यानुभाष्य च।
   कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः।। मनु. 3.30
2. ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्। अथर्ववेद 11.5.18
   कियतो योषा मर्यतो बुधूयोः परिप्रीता पन्यसा वार्येण।
   भद्रा वधूर्भवति यत् सुपेशाः स्वयं सा मित्रं वनुते जने चित्।। ऋ. 10.27.12
   ऋग्वेदे द्रष्टव्य- 10.85.26, 27, 1.51.13
3. ब्राह्मदैवार्षप्राजापत्यगान्धर्वासुरपैशाचराक्षसश्चेति।-गो. ध. 4.4.11, मनु. 3.29-36, या. स्मृ. 1.58-61, आश्व. गृ. सू. 1.6.1
4. पूर्वमायुः परीक्षेत पश्चाल्लक्षणमादिशेत्।
   निरायुषः कुमारस्य लक्षणैः किं प्रयोजनम्।। सामुद्रिक रहस्य, पृ.-44
5. दैवज्ञमनोहर, पृ. 82, विवाहवृन्दावन-पृ. 42

चत्वारः, ग्रहमैत्र्याः पञ्च, गणस्य षट्, भकूटस्य सप्त तथा च नाड्याः अष्टौ गुणाः भवन्ति।[1] गौतमऋषिः ब्राह्मणेभ्यः दशकूटाः, क्षत्रियेभ्यः अष्टौ कूटाः, वैश्येभ्यः षट्कूटाः तथा च शूद्रेभ्यः चत्वारः कूटाः विवाहविचारणार्थमुक्तवान्।[2] गौतमर्षिप्रोक्तकूटेषु नृदूरकूटः तथा च वल्लभकूटः सम्मिल्य षट्त्रिंशद् गुणाः अष्टकूटविचारे भवन्ति। नवकूटविचारे पञ्चचत्वारिशद् गुणाः तथा च दशकूटविचारे पञ्चपञ्चाशद् गुणाः भवन्ति, परन्तु साम्प्रतं सम्पूर्ण भारतवर्षे सर्वेभ्यः वर्णेभ्यः अष्टकूटाः एव विचार्यन्ते, नवकूटदशकूटविचारौ अप्रासङ्गिकं स्तः सामाजिकानां मध्ये।

अष्टकूटस्यान्तर्गते वर्णस्य निर्णयः प्रथमम्। तस्य गणना राश्याः आधारेण क्रियते। यथा–कर्कवृश्चिकमीनराशीनां विप्रवर्णः, सिंहधनुर्मेषराशीनां क्षत्रियवर्णः, तुलाकुम्भमिथुनानां वैश्यवर्णः, तथा च कन्यामकरवृषराशीनां शूद्रवर्णः भवति। मेलापकविचारे वरवर्णे उत्तमे सति दम्पत्योः उत्तमप्रेम भवति, तथा स्त्रीपुरुषवशंवदा समानवर्णत्वाद् द्वयोः प्रीतेरभावः, तथा सुखस्य हीनत्वं भवति। यस्मिन् मेलापके श्रेष्ठवर्णस्य कन्या तथा हीनवर्णस्य वरः प्राप्त स्यात्, तदा मेलापकदृष्ट्या परिणयः नैव कर्त्तव्यः। यतो हि तथात्वे स्त्रियः पत्युश्च विनाशः अवश्यम्भावी। शास्त्रेषु वर्णदोषस्य परिहारविषये निगदितमस्ति यत्, यदि वरस्य राशिवर्णाः कन्यायाः राशिवर्णात् हीनः स्यात्, परन्तु राशिस्वामी श्रेष्ठवर्णकः स्यात्, तदा वर्णमेलनं सम्पद्यते।[3] स्पष्टमस्ति यत् राशिवर्णवशात् दोषः विनश्यति, इत्येवं मतं दैवज्ञानाम्।

द्वितीयकूटस्य वश्यस्य निर्धारणं राशिवशात्क्रियते। **मुहूर्तगणपति**नाम्निग्रन्थे वर्णनं प्राप्यते यत्= कुम्भमिथुनकन्यातुलाः तथा धनुषः पूर्वार्द्ध भागः द्विपदवश्यः अर्थात् मानववश्यः भवति। सिंहवृषमेषधनुषः उत्तरार्द्धभागः तथा मकरस्य पूर्वार्द्धभागः चतुष्पदवश्यो भवति।[4] मकरराशेः उत्तरार्द्धः एवं च मीनराशिः जलचरवश्यो भवति। कर्कराशेः कीटः तथा च वृश्चिकराशेः सर्पः वश्यो भवति। स्पष्टमस्ति यत् सिंहराशिं विहाय समस्तराशयः पुरुषराशिवशगाः भवन्ति। जलजानि तद्भक्ष्याणि भवन्ति हि, तथा च वृश्चिकं विहाय सिंहवशगाः भवन्ति सर्वे। यथा–

---

1. नाडीभेदे गुणा अष्टौ सप्तसद्राशिकूटके।
   षड्गुणा ग्रहमैत्र्यां च सौहार्दे पञ्चखेटयोः
   योनिमैत्र्यां च चत्वारस्त्रयताराबले गुणाः।। दैवज्ञमनोहर, पृ. 92
2. विप्राणां दशकूटं स्यात्क्षत्रियाणां तथाष्टकम्।
   वैश्यानामथ षड्भेदं शूद्राणां च चतुष्टयम्।। दैवज्ञमनोहर, पृ. 102
3. हीनवर्णो यदाराशिः राशीशो वर्ण उत्तमः।
   तदा राशीश्वरो ग्राह्यस्तद्राशिं नैव चिन्तयेत्।। दैवज्ञमनोहर, पृ. 105
4. युग्मं कुम्भस्तुलाकन्या प्राग्दलं धनुषो द्विपात्
   परार्द्ध धनुषश्चैव पूर्वार्द्धं मकरस्य च।
   केशरी वृषभाख्यं च मेषश्चैते चतुष्पदः
   नक्रोत्तरदलं मीनो जलचारी प्रकीर्तितः।
   कर्कः कीकटसंज्ञश्च वृश्चिकस्तु सरीसृपः।। मुहूर्तगणपति-विवाहप्रकरण, 23, 24

**सर्वे वश्याः नृजातेः स्युर्भक्ष्यास्तेषां जलोद्भवाः।**
**सिंहं हित्त्वाथ सिंहस्य वश्यास्ते वृश्चिकं विना।।**[1]

वर्णवश्योरनन्तरं ताराकूटस्य विचारणं क्रियते। ताराकूटान्तर्गते नवताराः वर्णिताः सन्ति ज्योतिश्शास्त्रग्रन्थेषु जन्मसम्पदविपद्क्षेमप्रत्यरिसाध्यवधमैत्रात्रिमैत्रभेदात्। एतेषु तृतीयपंचमसप्तमतारा अशुभाः सन्ति। वरकन्ययो अन्योन्यं तृतीयपंचमसप्तमतारासद्भावात् प्रतिकूलप्रभावः प्रभवति। चतुर्थः योनिकूटस्य निर्धारणं तु अभिजितसहितनक्षत्रैः भवति। मुहूर्त**चिन्ता**मणिग्रन्थे प्रोक्तमस्ति-यत् अश्विनीशतभिषानक्षत्रयोः अश्वयोनिः, स्वातीहस्तयोः महिषः, धनिष्ठापूर्वाभाद्रपदयोः सिंहः, भरणीरेवत्योः हस्ती, पुष्यकृत्तिकयोः मेषः, श्रवणपूर्वाषाढयोः वानरः, उत्तराषाढाभिजितो नकुलः, रोहिणीमृगशिरानक्षत्रयोः सर्पः, ज्येष्ठानुराधयोः हरिणः, मूलाद्रयोः श्वा, पुनर्वस्वाश्लेषयोः मार्जारः, मघापूर्वाफाल्गुन्यः तथा च उत्तराभाद्रपदनक्षत्रस्य गौः इति।[2] अन्याः शत्रुयोनयः विवाहे त्याज्याः भवन्त्येव।

विवाहसमये उचितवरकन्याऽन्वेषणे विचारणीये च पंचमग्रहमैत्रीकूटस्य चिन्तनं क्रियते दैवज्ञैः। वेदाङ्गान्तर्गते समायाते ज्योतिश्शास्त्रस्यः बहुविधग्रन्थेषु ग्रहाणां मित्रामित्रविवरणं प्राप्यते। **जातकालङ्कारानुसारं** तु सूर्यस्य चन्द्रगुरुभौमाः मित्राणि सन्ति, बुधः समः तथा च शुक्रशनीशत्रू स्तः। चन्द्रमसः सूर्यबुधौ मित्रे शेषाः ग्रहाः समाः सन्ति। मङ्गलस्य गुरुसूर्यचन्द्राः मित्राणि, शुक्रशनीसमौ तथा च बुधः शत्रु अस्ति। बुधस्य शुक्रसूर्यौ मित्रे, मंगलगुरुशनयः समाः, चन्द्रः च शत्रुः भवति। गुरोः सूर्यचन्द्रभौमाः मित्राणि, शनिः समः, बुधशुक्रौ शत्रू भवतः। शुक्रस्य बुधशनी मित्रे, भौमगुरुसमौ तथा सूर्यचन्द्रौ शत्रू एवं च शनेः बुधशुक्रौ मित्रे, गुरुः समः तथा सूर्यचन्द्रभौमाः शत्रवः सन्ति।[3] स्मरणीयमस्ति यत् मैत्रीनैसर्गिकी तात्कालिकी च द्विधा भवति, किन्तु विवाहे सदा नैसर्गिकी मैत्री एव प्रशस्या भवति। परस्परं ग्रहाणां शत्रुतायाः स्थितौ दाम्पत्यजीवनं सर्वदा कलहपूर्णं भवति। अतएव विवाहे नैसर्गिकी मैत्री एव विचारयेत्, आप्नुयात् च। दैवज्ञानां इदमपि तमस्ति यत् कन्याविवाहे कुमारस्योपनयने च गुरुबलम् अवश्यं द्रष्टव्यम्।[4] यदा वरकन्ययोः राशीशः परस्परं मित्रं स्यात्, तदा पंचगुणाः समशत्रुत्वे, अर्धं सममित्रत्वे, चतुर्गुणा शत्रुमित्रत्वे, औदासिन्ये त्रयः गुणाः तथा च द्वयोः शत्रुत्वे शून्यगुणः प्राप्यते।

एकं तथ्यं नैव विस्मर्यते दैवज्ञैः, यदा षष्ठगणकूटस्य विचारणं भवति, तदा ते जानन्ति यत् गणानां संज्ञा नक्षत्राधीना एव वर्तते। गणः तु देवमानवराक्षसभेदात् त्रिधा भवति। **विवाहवृन्दावनमिति**ग्रन्थानुसारं पूर्वात्रयम् उत्तरात्रयं रोहिण्यार्द्राभरणीनक्षत्राणां मनुष्यसंज्ञकः गणः भवति। श्रवणस्वात्यनुराधापुनर्वसुपुष्य-

---

1. संस्कारचन्द्रिका पृ. 82, संस्काररत्नमाला, पृ. 460
2. मूहूर्तचिन्तामणि-विवाहप्रकरण, श्लोक-25, 26
3. जातकालङ्कार पृ. 7, 8
4. स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां च रवेर्बलम्। पा. गृ. ग. भ.-1.16.4
   विवाहे बलमावश्यं दम्पत्योर्गुरुसूर्ययोः।
   चेत्पूजां यत्नतः कुर्याद्दुर्बलप्रदत्ता तयोः।। संस्काररत्नमाला. पृ. 465

हस्तरेवत्याश्विनीमृगाशिरानक्षत्राणां देवसंज्ञकः गणः भवति एवं च शेषचित्राज्येष्ठाधनिष्ठाविशाखामूल-कृत्तिकाशतभिषामघाश्लेषानक्षत्राणां राक्षससंज्ञकः गणः भवति।[1] प्रयोजनं चैतेषां यत् वरकन्ययोः गणौ यदि अन्योन्यं राक्षसमनुष्यौ भवतः, तदा मृत्युः भवति। राक्षसदेवयोः अत्यन्तं शत्रुता भवति। शेषेषु मैत्री एव ज्ञातव्या। कन्यावरयोः स्वगणेमिलापे सत्येव उत्तमा प्रीतिः जायते, अन्यथा तु न।[2]

अष्टकूटेषु सप्तमः भकूटोऽस्ति। भकूटनिर्णयः राश्यनुसारं भवति। भकूटः सप्तधा भवति।[3] समानराशिः समसप्तकः चतुर्थदशमः त्रिरेकादशः नवपंचमः तथा च षडाष्डकः इति। एतेषु प्रथमचतुर्भकूटाः उत्तमाः तथा शुभाः च भवन्ति, यदर्हि अन्ये त्रयः प्रतिकूलाः एवमशुभाः मन्यते दैवज्ञैः।[4] एकराशौ द्वयोः राशिस्वामिनो परस्परं मित्रयोगे वा एकाधिपत्योगे दुष्टोऽपि भकूटः शुभदः भवति। अष्टकूटेषु नाडीकूटः शीर्षस्थः महत्तमः चास्ति। अन्येषां कूटानां केनापि परिहारादिप्रकारेण अशुभतास्यान्नाम स्वीकरणीयाः, किन्तु नाडीशुद्धिः सर्वदा सर्वथा चापेक्षते। महर्षिगर्गानुसारं ग्रहमेलापके शुभनाडीग्रहणं कृत्वैव मेलापकं समुचितं भवति। यतः ब्रह्मणा कन्याकण्ठसूत्रमेव एतन्निर्मितमस्ति। यथा-विवाहे मंगलार्थं विवाहपुष्टिकरणार्थं च मंगलसूत्रमावश्यकं भवति, तथैव नाडीकूटस्योऽपि आश्रयणमपि आवश्यकम्। नाडीकूटस्य वर्गीकरणं नक्षत्रमाश्रितमस्ति। ज्येष्ठामूलार्द्रापुनर्वसूत्तराफाल्गुनीहस्त-शतभिषापूर्वाभाद्रपदाश्विनीनक्षत्राणां गणना आदिसंज्ञकनाडी एवं च पुष्यमृगशिराचित्रानुराधा भरणीधनिष्ठापूर्वाषाढ़ापूर्वाफाल्गुनी नक्षत्राणां तथा च उत्तराभाद्रपदनक्षत्रस्य मध्यनाडी अथ च शेषनवनक्षत्राणां अन्त्यनाड़ीसंज्ञा भवति। आचार्यवराहमिहिरानुसारेण[5] मुहुर्तचिन्तामणिकारस्यानुसारेण च वरकन्ययोः नाड्यैकत्वे सति विवाहः अशुभः अमंगलकारी च भवति।[6] यदि नाडीदोषे सति नाडीवेधोऽपि स्यात् तर्हि कथमपि विवाहः नैव करणीयः। यदि बेधाभावरेव स्यात्, न तु नाडीदोषः, तदा विवाहः कथमपि भवितुं शक्नोति। नाडीवेधः नक्षत्रचरणाधारिणः भवति, एवं च प्रत्येकनक्षत्रे चत्त्वारश्चरणाः भवन्ति। नरपतिजयचर्यामुहूर्तचिन्तामण्यानुसारं च कन्यायाः वरस्य वा परस्परं प्रथमचरणस्य चतुर्थचरणेन सह,

---

1. विवाहवृन्दावन, पृ. 52-52
2. स्वगणे चोत्तमा प्रीतिः मैत्रीस्यान्नरदेवयोः।
   असुरामरयोर्वैरं मृत्युर्मानुषरक्षयोः।। इति।-विवाहवृन्दावन् पृ. 60
3. वर्णो वश्यं तथा तारा योनिश्च ग्रहमैत्रकम्।
   गणमैत्रं भकूटञ्च नाडी चैते गुणाधिकाः।। मुहूर्तचिन्तामणि-विवाह प्रकरण श्लोक, 21
4. एकराशौ महाप्रीतिश्चतुर्थदशमे सुखम्।
   तृतीयैकादशे वित्तं सुप्रजा समसप्तके।।
   षट्काष्टके मृतिर्ज्ञेया पंचमेत्वनपत्यता।
   नैस्वं द्विर्द्वादशेन्येषु दम्पत्योः प्रीतिरुत्तया।।- विवाहवृन्दावन-पृ.60
5. आद्येकनाडीकुरुते वियोगं मध्याख्यनाड्यामुभयोर्विनाशनम्।
   अन्त्ये च वैधव्यमतीव दुःखं तस्माच्च तिस्रः परिवर्जनीयाः।। वृ. सं., पृ. 215
6. एकनाडीवियोगश्च गुणैः सर्वै समन्वितः।
   वर्जनीयः प्रयत्नेन दम्पत्योनिर्धनप्रदः।। मु. चि. पीयूष टीका. पृ. 172 एवं द्रष्टव्य मु. चि. विवाहप्रकरण श्लोक. 34

द्वितीयस्य तृतीयेन सह वेधो भवति।[1] अतएव अयं त्याज्यः। नाडीदोषं प्रति**विवाहकुतूहलनाम्नि** ग्रन्थे कथितमस्ति, यत् शुक्रगुरुबुधेषु यदि वरकन्ययोः राशिनाथः मेलापके एकलः स्यात् तर्हि दैवज्ञैः यत्नपूर्वकं नाडीदोषः नैव वक्तव्यः।[2]

विवाहे वरकन्ययोः गुणानामपि मेलनं भवति, एवं च साकल्येन गुणानां योगः षट्त्रिंशत्संख्याकः एव लभ्यते। विवाहे आषोडशगुणाः निन्द्यः, आविंशतिगुणाः मध्यमः एवं च आत्रिंशद्गुणाः श्रेष्ठः, ततोधिकः उत्तमोत्तमः कथितोऽस्ति ज्योतिषविशारदैः। यथा–

**गुणैः षोडशभिर्निन्द्यं मध्यमं विंशतिस्तथा।**
**श्रेष्ठं त्रिंशदगुणं यावत्परस्तूत्तोत्तमम्।।**[3]

विवाहे नाडीदोषवेधयोः गुणविचारानन्तरं जन्माङ्गे मंगलीकविचारो अपि भवति। मंगलग्रहस्य विचारः जन्माङ्गात् चन्द्राङ्गात् च उभयथा करणीयोऽस्ति। मंगलीजातकविषये ज्योतिषविशारदानां मतमस्ति यत् लग्नात् चन्द्रात् वा मंगलग्रहस्य प्रथमद्वादशचतुर्थसप्तमाष्टमस्थानेषु स्थितौ सत्यां मंगलीदोषो भवति। अयं दोषः परस्परं एकत्रकुण्डल्यां स्यात्, परत्र कुण्डल्यां न स्यात्, तदा कन्यावरस्य तथा वरः कन्यायाः विनाशको भवति, किन्तु यदि द्वयोः कुण्डल्यां तादृशभौमस्थितौ सति, मंगलीदोषस्य सर्वथा परिहारो भवति। यस्मिन् मेलापके भौमतुल्यः भौमः वा तत्प्रकारकः पापग्रहः भवति, तदा विवाहः शुभफलदायी भवति एवं च कन्यावरौ दीर्घायुष्यः पौत्रपुत्रादिभिः सम्पन्नौ भवतः।[4] यथा–

**भौमतुल्यो यदा भौमः पापो वा तादृशो भवेत्।**
**उद्वाहः शुभदः प्रोक्ताश्चिरायुः पुत्रपौत्रदः।।**[5]

दैवज्ञानामिदमपि मतमस्ति यत् मंगलग्रहः यदा अशुभ स्थानेषु स्थितः सन् गुरुणा द्रष्टः स्यात्, तदा मंगलीदोषस्य प्रभावः न्यूनः भवति। एवं च भौमः तु कालपुरुषस्य बलरूपेण निगदितमस्ति

---

1. वेधो द्वादशनाडीभिः कर्त्तव्यः पन्नगाकृतिः।
   आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम्।
   द्वितीयेन तृतीयं तु तृतीयेन द्वितीयकम्।।
   एवं भांशव्यधो येषां जायते वरकन्ययोः।
   तेषां मृत्युर्न संदेहः शेषांशाः स्वल्पदुष्टदाः।। नरपतिजयचर्या, नाडीचक्रप्रकरण श्लोक. 21, 22
2. शुक्रेजीवे तथा सौम्ये एकराशीश्वरो यदि।
   नाडीदोषो न वक्तव्यः सर्वथा यत्नतो बुधैः।। विवाहकूतूहल. पृ. 127
3. लग्ने व्यये च पाताले यामित्रचाष्टमे कुजे।
   कन्याभर्तृविनाशाय भर्तृकन्या विनश्यति।। विवाहकूतूहल. पृ. 131
4. यामित्रे च यदा सौरि लग्ने च हिबुकेऽथवा।
   अष्टमे द्वादशे वापि भौमदोषोविनाशकृत्।। बृहद्ज्योतिश्सार–पृ. 158
5. ज्योतिर्निबन्धावलि–पृ. 54

